Tales

# VETALA PANCHAVINSHATI.

Vetalapañcavinsati

OR,

Twenty-five tales related by a Vampire to Rajah Vikramaditya.



COMPILED

BY

PANDIT JIBANANDA VIDYASAGARA, B. A.



CALCUTTA

PRINTED AT THE NEW INDIAN PRESS.
1873.

*To be had from Pandit Jibananda Vidyasagara B. A. Sanskrit College of Calcutta.*

पण्डितकुलतिलक-पूज्यपाद श्रीमत्-तर्कवाचस्पति
पाद-प्रणीत-प्रकाशित-पुस्तकान्येतानि ।

| | | |
|---|---|---|
| १ | आशुबोध व्याकरणम् | ३। |
| २ | धातुरूपादर्शः | २ |
| ३ | शब्दस्तोम-महानिधि [संस्कृत अभिधान] | १० |
| ४ | सिद्धान्तकौमुदी—सरलाटीकासहिता | ११ |
| ५ | सिद्धान्तविन्दु सार [वेदान्त] | ॥ |
| ६ | तुलादानादिपद्धति ( वङ्गाक्षरैः ) | ४ |
| ७ | गयाश्राद्धादिपद्धति | १ |
| ८ | शब्दार्थरत्न | ।।। |
| ९ | वाक्यमञ्जरी [ वङ्गाक्षरैः ] | । |
| १० | छन्दोमञ्जरी तथा वृत्तरत्नाकर—सटीक | ॥= |
| ११ | वेणीसंहार नाटक—सटीक | १ |
| १२ | मुद्राराक्षस नाटक—सटीक | १॥ |
| १२ | रत्नावली | ॥ |
| १४ | मालविकाग्निमित्र—सटीक | १॥ |
| १५ | धनञ्जय विजय—सटीक | । |
| १६ | महावीरचरित | १॥ |
| १७ | साङ्ख्यतत्त्वकौमुदी—सटीक | २॥ |
| १८ | वैयाकरणभूषणसार | ॥ |
| १९ | लीलावती | ।।। |
| २० | वीजगणित | १ |
| २१ | शिशुपालवध—सटीक | ६ |
| २२ | किरातार्जुनीय—सटीक | २॥ |
| २३ | कुमारसम्भव—पूर्व्वखण्ड सटीक | १ |

VETĀLAPAṂCHAVIṂŚATI

# वेतालपञ्चविंशतिः।

Vetālapañcaviṃśatiḥ

वि, ए, उपाधिधारिणा

श्रीजीवानन्द-विद्यासागर भट्टाचार्य्येण

सङ्कलिता


कलिकाता-राजधान्याम्

pur.

नूतन-भारत-यन्त्रे

मुद्रिता

इं १८७३

1873

श्रीकृष्णाय नमः ।

# वेताल पञ्चविंशतिः ।

दोर्द्दण्डद्वयलीलया चलगिरिभ्राम्यत्तदुच्चैरव-
ध्वानोद्गीतजगत् भ्रमत्पदभरालोलत्फणाग्रोरगम् ।
भृङ्गापिङ्गजटाटवीपरिसरोद्गङ्गोर्म्मिमालाचल-
चन्द्रं चारु महेश्वरस्य भवतां स्वश्रेयसे ताण्डवम् ॥
त्रैलोक्योदरदीपकाः सितरुचः सौभाग्यगर्व्वच्छिदः
स्तोकोन्मीलविलोचनद्वयसुधापूर्व्वैश्वराः शीतलाः ।
संसारश्रमहारिण स्त्रिजगतामुच्चैर्दिशन्तु श्रियं
भक्तानामभयप्रदानसुमुखाः कंसद्विषस्तेऽंशवः ॥

नमामि मञ्जुश्रियमद्भुतं हरिं
यदीयपादद्वितयं हरत्यघम् ।
प्रसादतो यस्य भवन्ति पण्डिता
लोकत्रयं निर्म्मलचेतसं सदा ॥

सान्द्रि श्रीवरदेववक्त्रकमलादाकर्ण्य भक्त्या गुरोः
वैतालस्य कथामतीव सुरसां पञ्चाधिकां विंशतिम् ।

श्रीमज्जम्भलदत्तकेन रचितां स्वल्पाक्षरैर्युक्तकै
श्चित्रार्थं स्मरणार्थमेव सुजनाः शृण्वन्तु कौतूहलात् ॥
सज्जना ! यदि युष्माकमास्ते श्रवणकौतुकम् ।
भवन्तोऽपि पठन्त्वेनां कथामद्भुतवर्णिताम् ॥

---

## उपक्रमणिका ।

इह हि महीमण्डले नरपतितिलको नाम विविधमणिकुण्डलमण्डितगण्डस्थलो नानालङ्कारभूषितसर्व्वशरीरो नानाशास्त्रविद्विविधगुणरत्नरत्नाकरो विविधेन्द्रनीलमरकत-पद्मराग-वैदूर्य्य-माणिक्य-मुक्तादिसमूह-समाहृतयक्षाधिराजविभवो नानादिगन्तरवर्त्तिभूमिधरकटकेषु सङ्गीतविद्याधरीभिरुद्गीयमानकीर्त्तिः पुरन्दर इव सर्व्वाङ्गसुन्दरो राजचक्रवर्त्ती श्रीमान् विक्रमकेशरी बभूव। स खलु नरपतिरनेकसामन्तामात्यपरिवृतस्सतु रुदधिमेखलाया भुवः स्वामी राजराजेश्वरोऽनिर्व्वचनीयं तद्राजसुखमनुभवन् कालं नयन्नवतिष्ठते। तस्याऽधिकारे अष्टसिद्धिकामः क्षान्तिशीलो गन्तुमुपचक्रमे ।

अथैकदा तस्य नरपतेरभ्युदिते भगवति मरीचिमालिनि मुखप्रक्षालनसमये पानीयोपढौकयितृपुरुषप्रमुखेन सुप्रशस्तं विचित्रं विल्वफलमेकं क्षान्तिशीलो नाम

कापालिकः प्रत्यहं राज्ञे प्रादीदिपत्। ततो नरपति स्तदादाय सुप्रशस्तं प्रत्यूषकाललब्धं फलमिदमभिनन्द्य तस्मिन्नेव राजपुरुषे नित्यमवस्थापयति। एकदा पूर्णेषु द्वादशसु वर्षेषु तद्दीयमानं विल्वफलं राज्ञः करकमलान्निपत्य प्राङ्गने भग्नं खण्डं वभूव। ततो नरपतिरपि तन्मध्यात् अमूल्यानि इतस्ततो गलितानि पञ्चरत्नान्यवलोक्य परां प्रीतिमवाप व्याजहार च। अये किमेतदाश्चर्य्यम्। मदीयरत्नभाण्डारभवने प्रयत्नेनान्विष्यमाणान्येतादृशानि रत्नानि न दृश्यन्ते इत्यालोच्य विस्मितस्तं पानीयोपनायकं पप्रच्छ। अरे पानीयोपनायक! यत् त्वं श्रीफलं नित्यमेव ददासि, तत् कुतः प्राप्नोषीति पृष्टः स कथयति। देव! क्षान्तिशीलः कापालिको भवत्प्रीतये प्रत्यहं मम हस्ते श्रीफलं दत्त्वा प्रस्थापयति। ततो राज्ञा भणितं पुरा न्यस्तविल्वफलानि सर्वाणि तान्यानीयन्तां ततो राजादेशं शिरसि निधाय तेन राजपुरुषेण भाण्डारगृहात् तान्येव फलान्यानीय राज्ञे प्रायच्छत्। राजा च सकलफलानि भङ्क्त्वानेकरत्नानि ददर्श, जगाद च अये! मदीयभाण्डारे बहुमूल्यानि नह्येतादृशानि रत्नानि विद्यन्ते। अरे! विल्वफल दातारं पुरुषं सम्प्रति ज्ञातुमिच्छामि। पुरुषो यदादिशति देव इति निगद्य वहिर्द्वारमुपेत्य तं कापालिक मादाय आगत्य राजानं व्यजिज्ञपत्। देव! योऽसौ विल्वफल-दाता कापालिकः— समानीतो द्वारि विद्यते। राजा—प्रवेशय तम्। ततस्तेनानीतः कापालिको राजदर्शनात् प्रमोद-

रभसं सम्प्राप्य सञ्जातरोमाञ्चकञ्चुको दक्षिणपाणि-मुत्तुल्य राजानमाशीर्वचनशतैः प्रीणयाञ्चकार। ततो राज्ञा कापालिकोऽभिहितः। भोः कापालिक! किमर्थ-मस्माकं चिरकालं विल्वफलव्याजेनामूल्यानि रत्नान्ये-तानि प्रदत्तानि? महासत्त्व! भवतः किमभीप्सितमस्ति तद्वद। ततः कापालिकेनोक्तम्। महाराज! यदि मयि देशान्तरिणि अनुग्रहोऽस्ति तदा विरले निभृतं यत्किञ्चित् निगदामि तत् शृणोतु। ततो राज्ञा समालोकितः परि-जनो दूरमपससार। ततोऽसौ कापालिको वदति राजन्! शान्तिशीलो नाम कापालिकोऽहं महायोगी तदिमां पृथ्वीं समस्तां दक्षिणावर्त्तिनीं कुर्व्वाणो मृतकसिद्धेरुत्तर-साधकं महासात्त्विकं प्रवीणं पुरुषविशेषमन्विष्यमाणो न कुत्रापि लेभे। तदा दैवागत्य सकल-गुणसम्पन्नो महा-सत्त्वो महत्प्रवीणो दृष्ट स्तत् यदि मदीये वचसि साव-धानं करोति भवान्, तदा स्वकीयाभिलसितं निवेदयामि। राज्ञोक्तं समभिधेहि, यत्ते अभिमतं, तत् सम्पादयिष्यामि। श्रुत्वा कापालिको जगाद। देव! मृतकवेतालसिद्धि-साधनाय भवन्तमनुवर्त्तयामि। तद्यदि मया समुदीर्य्य-माण-वचनं भवानङ्गीकरोति तदा मदीया सिद्धिर्महती भवति नान्यथेति। श्रुत्वा महापुरुषेण नृपतिनाङ्गीकार-परायणेनाभूयत। ततः स राजानमब्रवीत् यदि भवान् ममोत्तरसाधको भवति तदाहं सिद्धिं साधयिष्ये। तदर्थं भाद्रकृष्णचतुर्द्दश्यां दक्षिणश्मशानायतने मया स्थातव्यम्।

तस्मिन् दिवसे प्रदोष-समये परेणानुपलक्षित-शरीरेण भवता तत्र श्मशानायतने मत्समीपमागन्तव्यम्। तदा-तस्मिन्नेव समये स्वाभिमत-विशेषं भवते समभिधास्येऽहम् श्रुत्वैतत् राज्ञोक्तं, भवतु गच्छ स्वाभिमतं साधय तत्रैवाहं गमिष्यामि, करिष्ये तवाभिमत-सिद्धिमित्युक्त्वा राज्ञा विसर्ज्जित स्तदा कापालिकः स्वस्थानं चलितः।

ततः समायाते भाद्रे मासि कृष्णचतुर्द्दश्यां राजद्वारि समागत्य राजपुरुषमुखेन कापालिकेन विज्ञाप्य-मानो राजा देवान् पितृनभ्यर्च्य दिनकृत्यं समाप्य प्रदोष-समये परेणानुपलक्षितो वहिर्निःसृत्य कृपाण पाणिरेकचरो दक्षिण-श्मशानं कापालिकसमीप-मगमत्। राजा वदति कापालिकोऽयमहमागतोऽस्मि स्वाभिमतं वद। ततः कापालिको राजानमालोक्य हर्षोत्फुल्लनयनो राजानं प्रशशंस। भो महाराज! त्वमेव परमसात्त्विको महापुरुषः कृष्णचतुर्द्दश्यां भाद्रे मासि चक्रवर्त्ती भूत्वा कृपाण-पाणिमात्र-द्वितीयो महत्येवं घोरान्धकारे रात्रौ मत्समीपं श्मशानायतनं समयातोऽसि, सफलं ते जन्म संसारेऽस्मिन्। श्रुत्वा राजा सविनयमुवाच। भोः कापा-लिक! ब्रूहि यदभिमतं भवतः, श्रवणकुतूहलेन समायातं का मे भीतिः। तदा क्षान्तिशीलेनोक्तं भो महाराज! मया मृतकसिद्धिः साधयितव्या। तत्र भवता ममोत्तरसाधकेन भवितव्यम्। एतेन मम सिद्धिर्भविष्यति। साधिता-यान्तु सिद्धौ भवतामपि सिद्धिर्भविष्यति। तत् श्रुत्वा राज्ञा

भणितं कापालिक! मम सिद्धिर्भवतु न वा त्वमात्मनः कार्य्यं साधय, मया किन्ते कर्त्तव्यं तद्वद । कापालिकेनोक्तं भो महाराज! घर्घरा-तरङ्गिणी-तीरे तदुत्तरस्यां दिशि शिंशपातरोरुत्तरशाखायां लम्बमानोऽस्ति मृतः पुरुषो योऽवतिष्ठते, तं बहुमायाभाषिणं पातयित्वा स्कन्धे कृत्वा सत्वरं समादाय मौने महाच्छद-भवने समायाते भवति तदत्र नानाविध-पूजोपकरण-रचित-मण्डले तं परं स्नापयित्वा देवार्च्चनं विधाय संजप्य सिद्धिस्त्वया साधयितव्या भवतामभिमतञ्च भविष्यति। श्रुत्वैतत् राजा तेनैव प्रकारेण तत्र नदीतीरे गत्वा तादृशं शवं ददर्श। स च राजानमवलोक्य महाभीतिं प्राप्तवान्। ततो राजा तत्समीपमुपगम्य तदीयाकर्षणाय यावत् करं प्रसारयति तावद्वेतालाधिष्ठितः शवस्तदग्रशाखायां गत्वा ललाग। ततो राजा विहस्य मृतकमब्रवीत्। अरे मृतक! किमर्थं दूरं पलायसे? पश्य तरुवरमिममारुह्य त्वामहमवतारयिष्यामि। ततोऽपि स मृतकस्तद्भीत्या शाखायाः शाखान्तरं पलायते, विक्रमादित्योऽपि भ्रमति, एकशाखायां धृतवान्। ततो राजा स्वैरं स्वैरं तरुवरमारुह्य कृपाणेन द्विरटिकां कर्त्तयित्वा तरोर्बधस्थानान्मृतकमापातयत्। ततो मृतकः पतन-पीड़ा-व्याजेनात्युच्चैश्चक्रन्द, किचि-किचि-शब्दं करोति, सविनयकाकुवादं राजानमवादीत् च। भो राजन्! किं मया तव वैरत्वमाचरितम्। यतो जीवलोक-बहिर्भूतं कृपणं कृपापात्रं विजन-वन-तरुशाखा

मात्रावलम्बिनं निरपराधं मां कथमेवं कदर्थयसि। पतन-पीड़या मेऽस्थीनि जर्ज्जरितानि। श्रुत्वा राजोवाच। भो मृतक! नास्त्यत्र मम दूषणम्। तवैषा भवितव्यता मा कातरो भव त्वामहमवश्यं नेष्यामीत्युक्ता यावत् राजा तरोः सका-शात् पुनरपि शवं गृहीतुं करं प्रसारयति, तावन्मृतकः पलायित्वा तरोरग्रशाखायां गत्वा लगति। मृतको-ऽयमनेन प्रकारेण वारं पञ्च सप्त कदर्थयति। तदा राजा विमृश्य तरुमारुह्य तदग्रशाखायां छुरिटिकां कर्त्तयित्वा मृतकं पातयित्वा तदुपरि झम्पं दत्त्वा पतति। तदोच्चैः क्रन्दितं मृतकमपि स्कन्धे समारोप्य सत्वरं कापालिक समीपं गन्तुमारभत्। तदामृतक देहवर्त्ती वेतालस्तन्मौन-भङ्गं चिकीर्षुः राजानमब्रवीत् भो राजन्! यदि त्वयाहं निश्चितं नेतव्यः द्वाभ्यां कथाप्रहेलिकया पथि गम्यते तदा गमनपरिश्रमो न बाधते। देव! कथामहं कथयामि तव मतिं देहि, किन्तु कथायां प्रश्नोऽस्ति तस्योत्तरं विज्ञाय न भणसि चेत् तदा महापातकी भवसि, अविज्ञाते पातकं नास्ति।

---

## कथारम्भः।

अस्ति त्रिदिवतरङ्गिणी वाराणसी। तत्र प्रतापमुकुटो नाम राजा बभूव। तस्य महादेवी सोमप्रभा नाम। तस्यामनेन राज्ञा वज्रमुकुटोनाम तनयः समुत्पादितः।

तस्य वज्रमुकुटस्य प्राणसमः सखा सागरेश्वरस्य सान्धिविग्रहिकस्य तनयो बुद्धिशरीरो बभूव। तेन मित्रवरेण सह नानाशास्त्राभ्यासङ्कुर्व्वाणो विविधसुखमनुभवन् कालं नयमानस्तस्थौ। अथैकदा तं बुद्धिशरीरमित्रमादाय हयवरमारुह्य मृगान्वेषणाय कौतुकवशात् वनं प्रविवेश। ततो मृगान्वेषणश्रान्तः क्षुत्पिपासार्द्दितः वज्रमुकुटो बुद्धिशरीरमब्रवीत् सखे! सरोवरमालोकय तत्र स्नात्वा मृणालादिकं खादित्वा क्षुधोपशमनं कृत्वा सुस्थौ भवावः घोटकावपि पानीयं पीत्वा समर्थौ भवेताम्। ततस्तत्र गत्वा स्नानमाचर्य्य जलपानं कृत्वा सरस्तीरे मित्रेण सह कथालापं कुर्वन् मृणालादिकं खादन् कुमारः क्षणं विशश्राम। अत्रान्तरे तत्सरोवरं स्नातुमेका कन्या त्रैलोक्यमोहिनी सखिशतपरिवृता समागतवती। तामालोक्य वज्रमुकुटो मदनपीड़ितोऽभवत्। सापि वज्रमुकुटस्य सौन्दर्य्यमालोक्य कामशरहता सती स्वाभिप्रायमुपायेन दर्शितवती। निजशेखरोत्पलेषु उत्पलमेकमाकृष्य कर्णार्पितं कृत्वा दन्तहतं विधाय हृदये पद्ममेकमारोप्य जलक्रीड़ां समाप्य स्वस्थानं ययौ। तस्यां गतायां वज्रमुकुटं मूर्च्छितमवलोक्य बुद्धिशरीरो वदति सखे! किमेतत्? कुमारः कथयति येयमत्र स्नानार्थमागता सा मम प्राणान् गृहीत्वा गतवतीति विषण्णः स्थितः। ततो बुद्धिशरीरेणोक्तम्! मित्र! कातरो मा भव। साऽपि कामपीड़िता स्वाभिप्रायं दर्शयित्वा गता। कुमारेणोक्तं केन हेतुना भवता

लक्षितमिदम् ? बुद्धिशरीरः कथयति, मित्र ! निजशेख-
रात् उत्पलमेकं कर्णे तयाकृष्य यदर्पितं तेनाभिप्रायेण
शेखरदेशस्य राजा कर्णोत्पल नामेति विज्ञापितम् । तदुत्-
पलं चेत् दन्तहतं विहितं तेन दन्ताघातसान्धिविग्रहि-
कस्य तनया । अपरं पद्ममेकं हृदये समारोप्य गता,
तेनाभिप्रायेण पद्मावती नामधेया प्रबोधितः । कुमारो
वदति सखे ! चिप्रं तत्र गम्यताम् । ततो युवराज मादाय
बुद्धिशरीरो गत्वा तत्र वृद्धा दासी स्थिता तस्याः प्रीतिमुत्-
पाद्य तत्रैवावस्थानमकरोत् । तयोक्तं तदा कौ भवन्तौ,
किमर्थं रात्रावागतौ ? तया पृष्टौ तावभिहितौ अयि वृद्धे !
राजपुत्रावावां पर्य्यटनशीलावत्रायातौ स्वः । अयि वृद्धे !
तवावस्था कथमेतादृशी तत्कथ्यताम् । ततः सा रुदती ब्रूते ।
दन्ताघातस्य सान्धिविग्रहिकस्य दुहितुः पद्मावत्याः धात्री-
स्वसाऽहम् । तया भगिन्या सह कलहमकार्षम् ततः पद्मा-
वत्या कोपेन मह्यं किञ्चित् न दीयते । विशेषतः पुत्रो मे
द्यूतकारः, सर्वस्वं विनष्टं कृत्वा पलायितः । एतेन मम
भक्तवस्त्रं न सिद्ध्यति । युवयोर्धर्मशीलयो रखिलमेव कथितं
मया, तत्श्रुत्वा परिधानवस्त्रं दत्त्वा ताभ्यामुक्तम् । अयि
वृद्धे ! आवयोः कपर्द्दकेन द्रव्यादिकमानीय देहि । तव
पोषणमावाभ्यां कर्त्तव्यम् । ततस्तया प्राप्तवस्त्रया द्रव्या-
दिकमानीय दत्तम् । एवं विधिना नित्यमेव वृद्धा तयोः
सेवामाचरति ।

अथ तस्यां प्रीतायां एकदा बुद्धिशरीरेणोक्तम् । अयि

वृद्धे ! मम ताम्बूलपुष्पं गृहीत्वा पद्मावत्याः स्थानं गच्छ । ममैतद्द्रव्यादिकमालोक्य त्वां प्रति कोपं त्यक्ष्यति । द्रव्यादिकं दत्त्वा वदिष्यसि । त्वया सरोवरतीरे यौ कुमारौ समालोकितौ तावागतौ स्तः । ततो वृद्धा गत्वा तस्यै तद्द्रव्यादिकमदात् । रहस्यञ्च जगाद । ततः पद्मावती कोपान्विता सती कर्पूरेण तस्या वदनं निजदशभिरङ्गुलीभिरङ्कितवती । ततो वृद्धा गृहमागत्य सुखिनी भूत्वा बुद्धिशरीरे वृत्तान्तं निवेदयामास । तत् श्रुत्वा वज्रमुकुटो मूर्च्छितइव भूमौ निपपात । बुद्धिशरीरो वृद्धां तोषयित्वा मित्रमपि प्राबोधयत् । सखे ! कातरो मा भव कार्य्यसिद्धिरास्ते । सा वृद्धावदनं कर्पूरेण दशभिरङ्गुलीभिर्यदङ्कितवती । तेन ज्ञापयति शुक्ला दशमीयं शुक्लपक्षमपेक्षस्व । अथ कृष्णपक्षे समायाते ताम्बूलपुष्पं तस्याः स्थानं वृद्धया प्रेषयामास । वृद्धा तस्यै ताम्बूलादिकं दत्त्वा रहस्यं जगाद । ततः क्रुद्धा सा तस्या वदने ऽङ्गुलित्रयेण कुङ्कुमं दत्तवती । ततो रुदती सा गृहमागत्य तस्याश्चेष्टां तयोः कथितवती । साच बुद्धिशरीरेण तोषेण वचनामृतेनाप्यायिता । कुमारोऽवदत् सखे ! कार्य्यसिद्धिर्न भूता । बुद्धिशरीरेणोक्तं मित्र ! वृद्धावदने यत् तया मेरुणकुङ्कुमसहितमङ्गुलित्रयं दत्तं तेनात्मनोऽद्य ऋतुकालतां ज्ञापितवती । अथ दिनत्रये गते सति तेन तेन प्रकारेण तस्या स्थानं सा प्रस्थापिता । पद्मावती च वृद्धामवलोक्य सखीरादिदेश । द्वौ-वारिकाश्च पुरद्वार

मवरोद्धुम् एषा वृद्धा दासी शतैकेन हन्यताम्। वृद्धिकाया मियमशोकवृक्षप्रदेशे प्राचीरस्योत्तरवर्त्मना निःसार्य्य तां भवतीभिरिति। सा वृद्धा ताभि स्तेनैव मतेन निःसारिता। सा च गृहमागत्य युवराजयो रहस्यं निगदितवती। तत् श्रुत्वा बुद्धिशरीरो ब्रूते। पद्मावत्या भवतो गमनार्थं व्याजेन पन्था दर्शितः। तदद्य तया सह तव क्रीड़ा भविष्यति। ततो बुद्धिशरीरेण प्रस्थापितो वज्रमुकुटो वृद्धानिःसारणाभिव्यक्तीभूतेन पथा समुपागत्य पद्मावत्याः सम मशेषसुखमनुभवन् तस्थौ। तस्या गुणग्रामं बुद्धिशरीरे नित्यमागत्य कथयति।

अथैकदा पद्मावत्योक्तम्। प्राणेश्वर! दिवसे क्व गत्वा तिष्ठति भवान्? तत् श्रुत्वा कुमारेणोक्तं मम प्राणसखा बुद्धिशरीरो यत्रास्ति। तत् श्रुत्वा तया पापकारिण्या मनसेति चिन्तितम्। यदि विचक्षणोऽस्ति मम प्राणेश्वरमादाय स्वदेशं याति। तदाहमेतस्य विरहे कथं जीविष्यामि? ततस्तं निहत्य कालं नयामि। ततो महतादरेण विषसहितद्रव्यं बुद्धिशरीराय प्रस्थापितवती। बुद्धिशरीरो महिमानद्रव्यमवलोक्यावगततत्त्वो मित्राय ज्ञापयामास। मित्र! अत्र स्थातुमिदानीं न युनक्ति। कुमारेणोक्तं कथमेतत् वद। मित्र! विषसहितभक्ष्यद्रव्यमवलोकय। ततो विचार्य्य तद्भक्ष्यमात्रेण जन्तुमेकं मृतमवलोक्य वज्रमुकुटो ब्रूते। मित्र! पापिष्ठामेतां निहत्य स्वदेशो गन्तव्यः। बुद्धिशरीरो ब्रूते मित्र! नेयं वध्या। यतो भवान् स्त्रीवध-

महापातकी भविष्यति। तस्मात् बुद्धेयं स्वदेशे नेतव्या। कुमारेणोक्तं कथमेतत् सम्भवति? तेनोक्तं—उपायं करिष्यामि। इत्येव काले कर्णोत्पलस्य राज्ञः शिशुः सुन्दरो डाकिन्याखादितः। उपायावसरं प्राप्य बुद्धिशरीरो वज्रमुकुटमब्रवीत्, सखे! त्वमद्य गत्वा पद्मावत्याः सममशेषक्रीड़ां कृत्वातस्यां निद्रां गतायां सर्व्वाभरणमादाय लौहशलाकया तद्दक्षिणोरौ रेखात्रयं कृत्वा मत्समीपमागमिष्यसीति। अहं श्मशानं गत्वा योगिनो वेशधारी भवामि। ततो वज्रमुकुटस्तत् सर्व्वमाचरितवान्। ततः पद्मावती बुद्धा वज्रमुकुटहीनां शय्यामवलोक्य बहुविधं विलपन्ती सर्व्वालङ्कारहीना कथमपि प्रातरुत्थाय पितरमब्रवीत्। तात! मम सर्व्वालङ्कारा चौरेणाद्यापहृताः। सान्धिविग्रहिकोऽपि राजानं ज्ञापयामास। ततोराजा चौरान्वेषणाय नगरपालमादिदेश।

तस्मिन्नेव समये बुद्धिशरीरः वज्रमुकुटमब्रवीत्। सखे! स्वर्णवणिकगृहं गत्वाऽलङ्कारं विक्रीणातु भवान्। ततश्चौरं कृत्वा कोऽपि त्वामाकर्षयिष्यति, तदा वदिष्यसि नाहं चौरः। किन्तु योगिनोऽलङ्कारविक्रयमाचरामि। यदि मद्वचने सम्प्रत्ययो नास्ति, तदा श्मशानवासिनं योगिनमुपगम्य प्रतिसन्धानं कुरु। स यद्येतत् नाङ्गीकरोति, तदा समुचितं फलं दास्यसि, इति निगद्य तमादाय मत्समीपमागमिष्यसि। भवति मत्समीपगते मया तस्योत्तरं दातव्यम्। ततो वज्रमुकुटं स्वर्ण-

कारवीथिकायामलङ्कारविक्रीयमाणं विधृत्य नगरपालो राजनं ज्ञापयामास। देव! पद्मावत्याः सर्व्वाभरणसमेत-श्चौरोऽयं प्राप्तः। राजा च तस्य शिरश्छेत्तुमादिदेश। अथ वज्रमुकुटो वदति, देव! नाहं चौरः, किन्तु योगिनोऽलङ्कारविक्रयं करोमि। स योगी श्मशाने विद्यते। विनापराधे मयि हते भवति महानधर्म्मो भविष्यति। किन्तु मद्वचनं भवति न वा श्मशानवासिनं पृच्छ। स यद्येतन्नाङ्गीकरोति तदा चौरफलं दास्यसि। ततो राजाज्ञया समानीतः स योगी पृष्टो ब्रूते देव! ममैव धनमेतत्। एतद्विक्रेतुमयं मया प्रयत्नेन प्रस्थापितः। तत् श्रुत्वा राजा वदति, कथमहो पद्मावत्याभरणमिदं भवता प्राप्तम्? योगी वदति देव! मयात्रावस्थितेन कृष्णचतुर्द्दश्यां कृष्णायां रात्रौ सर्व्वालङ्कारभूषिता मृतनृपबालककृता-शना कन्या रूपयौवनसम्पन्ना डाकिनीवेशधारिणी अलङ्कारं श्मशाने स्थापयित्वा मस्तके मृतास्थीनि वहन्ती दृष्टा; तां नृपशिशुपुत्रखादिनीमवलोक्य लौहशलाकया दक्षिणोरौ रेखात्रयं चिह्नं प्रदत्त्वा सकलरत्नाभरणं परिहृतम्। तत् कस्याभरणमिदं तस्या दक्षिणोरौ रेखात्रयमवलोकयतु देव!। ततो योगिनो वचनेन समधिगततत्त्वो राजपुत्र-मरणविषये पद्मावतीं डाकिनीं निश्चित्य हन्तुमुद्यतोऽभवत्। ततो योगी राजानं वदति, देव! भवान्, महापातक-मूलं स्त्रीवधं मा करोत्विति। विशेषतः समाधिदृष्ट्या मया ज्ञातं, अस्याः पापिष्ठायाः शोणितपातं यत्र भवेत्

तत्राचिरेणैवाकल्याणं भविष्यति। ततो भवता प्रत्याख्यं निर्व्वास्यतामिति। ततः स राजा योगिनो वचनमकार्षीत्। ततः पद्मावतीमादाय युवराजादयः स्वदेशं गतवन्तः। ततः पद्मावत्याः शोकेन सान्धिविग्रहिको दन्ताघातः सपत्नीकः परलोकमगमत्।

वद राजन्! तस्य सभार्य्यस्य बधापराधः कुत्र सम्भवति? राजा वदति शृणुरे वेताल! असम्यग्विचारणया तस्य सपत्नीकस्य बधो राजनि कर्णोत्पले भवति। नृपताविति वादिनि स वेतालः शिंशपावृक्षे पुनर्ललाग। इति प्रथमोवेतालकथाप्रबन्धः।

---

## द्वितीयकथारम्भः।

ततः पुनरानीयमानो वेतालः कथामपरां कथयति। आसीत् कालिन्दीकूले ब्रह्मपुरनामधेयं नगरम्। तत्राग्निस्वामी नाम ब्राह्मणः प्रतिवसति। तस्य मन्दारवती नाम कन्या विद्यते। तां त्रैलोक्यसुन्दरीमवलोक्य त्रयो ब्राह्मणकुमारास्तस्याः पाणिग्रहणचिकीर्षवः अग्निस्वामिनमभ्यर्थयन्ति। अग्निस्वामिनोक्तं यूयं रूपवन्तो धनवन्तो महाकुलप्रसूता विख्यातवीर्य्याश्च, किन्तु एका कन्या कस्मै देयेति? एकेनोक्तं मह्यमिमां दीयताम्। अपरेणोक्तं

यदीयमेकस्मै कन्या दीयते तदापरौ द्विजपुत्रौ जीवनं त्यक्ष्यतः। तदा भवतो बधभागिता भवेत्। अग्निस्वामी च ब्रह्मबधभयात् कस्मैचिद्ब्राह्मणाय न ददाति। इत्येव काले विधिवशात् मन्दारवती परलोकमगात्। अथ तस्यां दग्धायां एको ब्राह्मणः तच्चिताभस्मना निजदेहं विलिप्य सन्तापेन जटाबन्धनधारी देशान्तरमगमत्। अपरो ब्राह्मणस्तस्यास्थीनि गृहीत्वा नानातीर्थं जगाम। अपरो ब्राह्मणः तस्याश्चिताभस्मणि गृहं कृत्वा तत्रैव परिहृतसुख-स्तस्थौ।

अथ जटाधरो ब्राह्मणो भ्राम्यन् रुद्रशर्म्मणो ब्राह्मणस्य गृहं भोजनार्थमागतः। ततो रुद्रशर्म्मणा उक्तं ब्राह्मणि! अस्मै ब्राह्मणाय महात्मने अन्नं देहि। ततो रन्धनसमये ब्राह्मण्या क्रन्दन् कुमारोऽग्नौ प्रक्षिप्तः। तं शिशुं मृत-मवलोक्य अन्नं विहाय जटाधरो गन्तुमुद्यतोऽभवत्। तं गच्छन्तमवलोक्य सिद्धिमन्त्रेण तं पुत्रं अजीजिवत्। तं पुत्रं दर्शयित्वा अनेन गच्छन् जटाधरः समा-नीतः। ततो जटाधरोऽन्नं खादित्वा सञ्जीवनी-पुस्तक मपहृत्य मन्दारवती-चितास्थानमागतः। अपरो नाना तीर्थेऽस्थीनि स्नापयित्वा तत्रैवागतः। अपरश्चितारक्षक-स्तत्रैवास्ते। अथ द्वयोः स्थानाद्भस्मास्थिनी गृहीत्वा भस्म-नाम्ना च मन्दारवतीं मूर्त्तिमयीं कृत्वा पुस्तकमन्त्रेण जटा-धरस्तां जीवयितवान्। तां प्राप्तजीवनामवलोक्य सर्व्वेऽस्याः पाणिग्रहणचिकीर्षवोऽन्योन्यं कलहयन्ति।

वेतालो वदति वद राजन्! तस्याः पतिर्धर्मार्थतः, को भवति? मौनपरायणोऽपि राजा धर्मं विचिन्त्य तस्य सन्देहच्छेदं कर्त्तुं ब्रूते ।

शृणुरे वेताल! मन्त्रवान् ब्राह्मणस्तस्याः पिता भवति स्रष्टत्वात् । अस्थिस्नापक स्तीर्थपूतोऽस्याः पुत्रो भवति परलोकसौख्यत्वात् । चिताभस्मरक्षकस्तस्याः पतिर्भवति अपेक्षत्वात् । नृपताविति वादिनि वेतालः शिंशपावृक्षे पुनर्ललाग । इति द्वितीयो वेताल-कथाप्रबन्धः ।

---

## तृतीयकथारम्भः ।

नृपोऽपि सत्वरं गत्वा पादपादवतार्य्य तम् स्कन्धे पुनः समारोप्य श्मशानं पुनरराययौ । नीयमानं महीपालं कुणपः पुनरब्रवीत् ।

हर्षेण शृणु राजेन्द्र! शुकशारिकयोः कथाम् ।

अस्ति भागीरथीपरिसरे सकलमहीमण्डलालङ्कारभूषितं पाटलिपुत्रनाम नगरम् । तत्र सकलगुणसम्पन्नो विक्रमकेशरी राजा बभूव । पराक्रमकेशरी नाम तस्य पुत्रोऽभवत् । स तु सकलकलासम्पन्नो विद्वान् धार्म्मिको राजलक्षणयुतो युवराजः । तस्य युवराजस्य सर्वशास्त्रपरिदर्शी भूतभविष्यकालत्रितयाभिज्ञो विदग्धाभिधानः पक्ष-

रस्थः क्रीड़ाशुकः तस्थौ। एकदा स च पराक्रमकेशरी शयनागारे रहसि विश्रम्भकथाकेलिपरिहाससमये शुकं पप्रच्छ। भोः शुक! विदग्धस्त्वमिति। किं जानासि का मे प्रिया भविष्यति, यया सह क्रीड़ानिर्भरसुरतसम्भोग-सुखेन दिवसानि नेष्यामि? श्रुत्वा शुकेनोक्तम्। युवराज! मगधाधिपतेश्चन्द्रावलोकस्य राज्ञः सुता चन्द्रप्रभा नाम्नी धर्म्मपत्नी ते भविष्यति। तया रूपयौवनसम्पन्नया सह सकलमनोरथसुरतसम्भोगसुखमनुभूय जन्म सफलं करि-ष्यति भवान्। किन्तु तस्याश्चन्द्रप्रभायाः क्रीड़ापरा सौ-धाम्मिका नाम्नी सकलगुणसम्पन्ना सारिकैका विद्यते। सापि तथैव युवती मधुरवाक्या च। अतएव निगद्यते अनु-रूपसंयोगरसिकेन विश्वसृजा तथा रचितं, यथा सा तथा सारिका। इत्युक्त्वा विरराम।

अथ कियता कालेन दैवघटनया मगधेश्वरः पराक्रम-केशरिणे चन्द्रप्रभां विवाहेन प्रादात्। युवराजस्तां स्वदेशे समानीय पितुः समादेशादनुदिनं राजचर्य्यां विधाय रात्रौ प्रियतमया चन्द्रप्रभया समं सुरतसुख-सम्भोगेन कालं नयन्नवतिष्ठते। युवराजस्य क्रीड़ाशुको यत्र शयनागारे सुवर्णपञ्जरस्थो विद्यते, तत्रैव सुवर्णमयी विदग्धा सारिका चन्द्रप्रभया रक्षिता विद्यते।

एकदा युवराजश्चन्द्रप्रभया सह सुरतसम्भोगं चकार। आयासेन च दम्पती निद्रां गतौ। एतस्मिन् समये शुकेन शारिका प्रोक्ता प्रिये शारिके! भजस्व माम्! श्रुत्वा

सारिका शुकमभ्यभाषत। अरे! पुरुषाः कृतघ्नाः कठिनहृदयाः, सर्व्वथा पुरुषसमागमो न मे रोचते। कथमेवं वदसि? श्रुत्वैतत् शुकः क्रोधपरो ब्रूते। पापिष्ठे! कथमिदं वदसि? अहमिति जानामि स्त्रियः कृतघ्नाः पापीयस्यः, सर्व्वथा स्त्रीणां सङ्गो न विधेयः। इत्यन्योऽन्यविरोधे युवराजो सम्बोध्य शुकं पृच्छति शुक! किं ब्रूषे? शुकः स्वकीयवचनं शारिकावचनञ्च कथितवान्। युवराज! भवानस्य वचनस्य संशयच्छेदं करोतु। तदा पराक्रमकेशरी आह शारिके! त्वं ब्रूहि—केन कृतघ्नाः पुरुषाः। शारिका सविशेषं कथयति। शृणु युवराज! येन कृतघ्नाः पुरुषाः।

"मध्यदेशे मदयन्ती नाम नगरी समासीत्। तस्यां महाधनसम्पन्नः सकलवणिजां मुख्यतमो गन्धदत्तो नाम वणिक् प्रतिवसतिस्म। तस्य पुत्रो धनदत्तोऽभूत्। सर्वस्वं पितुर्द्यूतेन नष्टं कृत्वा देशान्तरमकरोत्। ततः स धनदत्त इतस्ततः प्रभ्रमन् चन्दनपुरनिवासिनो दयायुक्तस्य हिरण्यगुप्तस्य गृहमागतः। तं तथाविधमवलोक्य स तं प्रपच्छ। को भवान् किमर्थमत्रागतोऽसि? पृष्टो वृत्तान्तमखिलमेवायमब्रवीत्। तत् श्रुत्वा तेनापुत्रेण हिरण्यगुप्तेन रत्नावती नाम कन्या तस्मै विवाहेन दत्ता। तत्र तया सममसौ धनदत्तो विविधसुखमनुभवन् तिष्ठति। अथ कियति काले गते श्वशुरमब्रवीत्। तात! आज्ञापय स्वदेशं गच्छामि। तदादिष्टो नानारत्नसमेतदासीद्वयं संहतिं प्राप्य रत्नावल्या सालङ्कारया स्वदेशं गच्छन्

गहनाटवीं प्रविवेश। तत्र कूपमेकमासाद्य तां पतिव्रतां सखिद्वयसहितां निहत्य सर्व्वालङ्कारमादाय स पापिष्ठोऽभिलषितस्वदेशं जगाम। ततो रत्नावती परमायुवशात् कथमपि जीवितवती। सख्यौ मृतवत्यौ। अनन्तरं विधिवशात् बहवोऽध्वनीनास्तृष्णार्त्ताः कूपसमीपमागत्य तामालोक्य विस्मिताः पप्रच्छुः। पृष्टा ब्रूते। पितरो धर्म्मशीलाः! अस्मिन्नरण्ये चौरेण ममाभरणं गृहीत्वा मामपि निहत्य गतम्। तद्भयान्मे पतिः कुत्र गत इति न ज्ञायते। तस्मान् मां चन्दनपुरं प्रापय। तेऽपि सर्व्वे चन्दनपुरं व्यवसार्थं गच्छन्ति। एतेनाधिकस्नेहेन सा तत्र नीता। तथा तां दुहितरमालोक्य अब्रवीत्। पुत्रि! किमेतत्? पृष्टा सा साध्वी चौरस्य दोषं निगदितवती, न तु पापात्मकस्य भर्त्तुः। ततः पिता ये रत्नावतीमानीतवन्तस्तान् सर्व्वान् अशेषताम्बूलवस्त्राणि दत्त्वा प्रेषयामास। रत्नावती च पतिं ध्यात्वा भृशमवतिष्ठतेस्म।

अथ कियता कालेन धनदत्तोऽपरधनापहरणशीलः पुनराजगाम। तमायातमालोक्य हिरण्यगुप्तो हृष्टो बभूव। इत्येव काले रत्नावतीमालोक्य कृतघ्नोऽयं पापिष्ठो महान् त्रस्तोऽभूत्। रत्नावती ब्रूते प्राणेश्वर! त्वमशङ्को भव। मया प्राप्तजीवनया पितुःस्थाने भवतो भर्त्तुः कश्चिद्दोषो नाभिहितः, किन्तु चौरस्य। पथिकैरहमानीता त्वामेव ध्यायन्ती तिष्ठामि। पुण्येन मया पुनर्भवान् प्राप्तः। तत् श्रुत्वा हर्षितस्तत्र रत्नावत्या सह नानासुखमनुभवं-

स्तिष्ठति। अथैकदा रतिश्रमेण निद्रां गतायां रत्नावत्यां तस्याः सर्व्वाभरणमादाय पुनर्द्यूतलुब्धोऽयं पापिष्ठः पलायितः। ततः सा रत्नावती धनदत्ताधीनजीवना हा! प्राणेश्वरेति कृत्वा जीवनं तत्याज। पुरुषकथा मया कथिता"।

तत् श्रुत्वा पराक्रमकेशरी शुकमवोचत्। शुक! त्वमपि स्त्रीदूषणं कथय। पृष्टः शुकः कथयति।

"शृणु देव! दक्षिणस्यां दिशि अपूर्व्वहर्षवती नाम नगरी। तस्यां धर्म्मबलो नाम राजा बभूव। तस्य राज्ञः प्रियतमो वसुदत्तो नामामात्योऽभूत्। वसुदत्तस्य त्रैलोक्यमोहिनी तनया वसुमती नाम्नी अभवत्। वसुदत्तस्तां कन्यां ताम्रलिपिकानामनगरीश्वराय समुद्रदत्ताय विवाहेन दत्तवान्। तां विवाहयित्वा समुद्रदत्तः स्वदेशमगमत्। सा कन्या पितृगेहे स्थिता। अथेयमेव कन्या तन्नगरवासिनं द्विजपुत्रमतिमनोहरमवलोक्य प्रियसखीं प्रस्थाप्य समानीय मासाभ्यन्तरे तेन सममशेषसुखमनुभवन्ती तिष्ठति। अथ कियता कालेन निजपतिरस्याः समुद्रदत्तः समायातः। वसुदत्तस्तस्यातिथ्यं विधाय रात्रौ दिव्यमन्दिरे शयितुं जामातरमादिदेश। वसुमती च तत्रैव प्रस्थापिता। तस्यामेव रात्रौ चौरेण मनसि चिन्तितं,—रतिक्रीड़ाश्रमेणायं समुद्रदत्तः सभार्य्यो निद्रां यास्यति। तदाहमेव सर्व्वस्वं सुखेन नेष्यामि। इत्यालोच्य तत्र गत्वा सन्धिं दत्त्वा प्रदीपच्छायायां स्थितः। समुद्रदत्तः श्रमेण किञ्चित् न बुबोध। सा द्विजकुमारं स्मृत्वाऽसुखिनी भूत्वा तस्थौ।

ततो निद्रागतसमुद्रदत्तमवलोक्य कामविह्वला सा कोपात् गन्तुमुपचक्रमे। इत्येवकाले भयात् दूत्या द्विजकुमारागमनं वसुमत्यामभिहितम्। सापि ब्रूते दूति! त्वं ममालङ्कारभूषिताऽत्र तिष्ठ, यावदहं द्विजकुमारं सम्भाष्य समागच्छामि। दूत्या तथाकृते वसुमती सङ्केतस्थानं जगाम। विधिवशात् चौरोऽयमिति ज्ञात्वा स द्विजकुमारः द्वारिकेण महाकाण्डहतः कथमपि सङ्केतस्थानं गत्वा पतितः। वसुमती द्विजकुमारं तथाविधमवलोक्य तस्य मुखे मुखं दत्त्वा विलपन्ती तस्थौ। इत्येवकाले द्विजमुखे विधिवशात् तस्या नासिका प्रविष्टा। अतोऽचैतन्यात् मरणसमये दन्ताघातेन नासिकां चिच्छेद। ततो गतनासिका वसुमती विचिन्त्य मृतं तं विहाय पत्युः शय्यामागत्य दूतीम् वृत्तान्तमभिहितवती। दूती वदति वसुमति! निर्बुद्धिर्मा भव। मत्वचनमाचर। पितुः स्थानं गत्वा समुद्रदत्तस्य दोषमाख्यापय। तदा वसुमती सखीसमेता क्रन्दन्ती पितृसमीपं गत्वा भर्तुर्मिथ्यापवादमभिहितवती। चौरस्य वसुमत्याः समुद्रदत्तस्य, दूत्याश्च चरित्रं दृष्ट्वा दूषयित्वा च गतवान्। वसुदत्तस्तां कन्यां विनसां विलपन्तीमालोक्योवाच, पुत्रि! किमेतत्? इति पृष्टा लज्जया किञ्चिन्न वदति। तदैषा पापिष्ठा स्फुटभाषिणी सखी ब्रूते। प्रभो! भवतो दुहिता परिहासपरायणस्य समुद्रदत्तस्य लज्जया किञ्चिदुत्तरं न दत्तवती। एतावतापराधेनास्या नासिकां चिच्छेद। रहस्यमेतत् श्रुत्वा वसुदत्तः कोपात् राजानं ज्ञापयामास। ततोऽति-

क्रुद्धेन राज्ञा समुद्रदत्तस्य शिरश्छेत्तुमाज्ञा विहिता। एतावति समये दयालुश्चौरः सर्ववृत्तान्तदर्शी दण्डवत् प्रणाममाचर्य्य वदति। देव! नायं बध्यः। राजाह कथं न बध्यः? तदास्य प्राणरक्षार्थम् चौरः आत्मानं चौरमुपदर्श्य सर्ववृत्तान्तं राज्ञे निवेदयामास। तदावगततत्त्वो राजा वसुदत्तं प्रियतममभ्यधात्। सखे! भवतो दुहितातीवाकार्य्यकारिणी, तस्मादियं निर्व्वास्यतामिति। वसुमतीं निर्व्वास्य दूत्यायोचितफलं दत्त्वा, चौरं नगररक्षकं कृत्वा समुद्रदत्तो वहुतररत्नदानेन प्रसादितः स्वदेशाय प्रस्थापितश्च। देव! मया स्त्रीदूषणमेव कथितम्। स पराक्रमकेशरी तयोः कलहनिर्णयाक्षमोऽवासीत्"।

अथ वेतालः राजानं पप्रच्छ। राजन्! ब्रूहि स्त्रीपुरुषयोर्म्मध्ये किं पुरुषाः कृतघ्नाः? किं स्त्रियः कृतघ्नाः? श्रुत्वा राजोवाच। लघुचित्ताः स्त्रियः सकलपापानां भाजनमिति कृत्वा विश्वसृजा निर्म्मिताः। पुरुषेषु कश्चित् क्रूरस्तिष्ठति। स्त्रियः स्वभावतः क्रूराः पापकारिण्यो भवन्ति।

इति राज्ञा परिच्छिन्नं कृत्वा संशयमुत्तमम्।
मौनभङ्गं विधायास्य जगाम च पुनर्द्रुमम्॥

इति श्रीजम्भलदत्तविरचितकः तृतीयो वेतालकथाप्रबन्धः।

---

## चतुर्थकथारम्भः ।

ततो राजा समालोक्य स्कन्धं शून्यं पराशुना ।
पश्चाद्वृक्षतलं गत्वा शवं स्कन्धे चकार च ॥
तथैव शवमादाय श्मशानं गन्तुमुद्यतम् ।
स्कन्धारूढ़ः स वेतालो राजानं पुनरब्रवीत् ॥
अवधानं विधेहि त्वं राजन्! सत्वपरायण ! ।
विचित्रां विविधां रम्यां कथां कथयतो मम ॥

अस्मिन्महीमण्डले सकलराजलक्षणोपेतो राजा सार्व्वभौमः शूद्रको नाम समासीत्। एकदाऽमात्यगणपरिवृतस्य परिषदमवस्थितस्य राज्ञः पुरद्वारि देशान्तरात् आगत एको राजपुत्रः पुत्रभार्य्यासमेतो वर्त्तनार्थी दूरादेव दक्षिणापथसकाशात् समागत्य द्वौवारिकमब्रवीत्। भो द्वौवारिक ! मामवेहि राजपुत्रमहं पुत्रभार्य्यासहायः शूद्रकमहाराजस्य यशः श्रुत्वा वर्त्तनार्थी समागत्य तिष्ठामि। मम वृत्तान्तं राजनि विज्ञापय। श्रुत्वैतत् प्रतीहारी राजानं विज्ञाप्य द्वौवारिकेण नीयमानं तमवलोक्य राजा पप्रच्छ। को भवान्? किमर्थमिहागत्य मिलितः इति पृष्टो ब्रूते देव! वीरवरनामा क्षत्रियोऽहम्। सेवाकाङ्क्षी समागत्य तिष्ठामि। राजा वदति किं जीवनं कर्त्तव्यं तद्वद। वीरवरेणोक्तं प्रत्यहं सुवर्णशतपञ्चत्रयं ददातु, देव! राजाऽब्रवीत्। अहो! अत्रानेकगुणवन्तः सन्ति। केषा-

मपि एतावज्जीवनं न विद्यते।. तत् श्रुत्वा वीरवरो नृपति-मभिनिन्द्य चलितः। ततः सान्धिविग्रहिकेणोक्तं देव! एतेन मा कातरो भव, दिवसकतिपयं एतावज्जीवनं दत्त्वा वीरवरः परीक्ष्यताम्। बहुलधनमपि विनष्टं न भविष्यति। ततो राज्ञा पुनरानीय तस्मै यथाभिलषितवर्त्तनं दत्त्वा प्रस्थापितोऽयं वीरवरो वर्त्तनधनस्यार्द्धं ब्राह्मणेभ्यो दत्त्वा चतुर्थांशं अन्धपङ्गुजनेभ्यो दत्त्वा अवशिष्टचतु-र्थांशेनात्मानं वर्द्धयति। एवं राजसेवां कुर्व्वन्नास्ते। अथैकदा दक्षिणस्यां दिशि रात्रौ एका स्त्री करुणस्वरेण रोदिति। तत् श्रुत्वा राजा वदति। द्वौवारिकस्तिष्ठसि। वीरवरेणोक्तं देव! अहमस्मि। नृपेणोक्तम्—वीरवर! का रोदिति? तां निश्चित्य मां ज्ञापय। ततोऽयं गतः। राजा च तस्य वर्त्तनतत्त्वमवज्ञातुम् अनुपलक्षितो जगाम। वीरवरस्तत्र गत्वा रुदतीमालोक्याब्रवीत्। मातर्भवती किमर्थम् एकाकिनी रोदिषि? सा तु यत्नेन पृष्टा ब्रूते। वत्स! अहं शूद्रकस्य लक्ष्मीः, स महात्मा प्रातःकाले नाशं गमिष्यति। तदहमिदानीं कुत्र स्थास्यामि इति रोदिमि। तत् श्रुत्वा वीरवरेणोक्तम् मातर्भगवती यथा चिरस्थायिनी, राजा च चिरजीवी भवति, तदुपायं वदतु भवती। अहं तावत् करोमि। लक्ष्मी ब्रूते वत्स! तत् दुष्करं कर्म्म कः करिष्यति? वीरवरेणोक्तं मयाऽशक्यमपि कर्त्तव्यमिति वदतु भवती। लक्ष्मी ब्रूते द्वात्रिंशत्लक्षणोपेतं पुत्रं समानीय तन्माता-भगिन्यौ तच्चरणौ दधाते। स्वयमपि स्वेच्छया पिता

कात्यायन्यै बलिं ददाति, तदा राज्ञः शोभनं भवति केशावपर्णशिरश्छदं यदि पुत्रः स्वीकरोति, तदैव नान्यथेति निगद्य लक्ष्मीरन्तर्हिता बभूव। राजा सर्वं श्रुत्वा तदनुसरणं करोति। वीरवरः सहसा स्वगृहं गत्वा पत्न्यां पुत्रे दुहितरि च सर्वमकथयत्, प्राबोधयच्च। तत् श्रुत्वा पत्नी वदति यद्येतत् दुष्करं कर्म्म न कर्त्तव्यं तदा परलोके निस्तारः कथं भविष्यति। तत्पुत्रः शक्तिवरो ब्रूते। ततो धन्योऽहं, यन्मरणे राजा चिरजीवी, राज्यस्य च निस्तारो भविष्यति; दुहिता चाभिनन्दति। राजा सुगुप्तः सर्वं श्रुत्वाऽनुपलक्षितस्तिष्ठति। वीरवरः सपरिवारस्तत्र गत्वा तेनैव विधिना राज्ञो विपत्तिक्षयहेतवे स्वपुत्रं भगवत्यै बलिं दत्त्वा तत् शोकं परिहर्त्तुं राज्ञो दीर्घायुष्यकामस्तेन खड्गेन आत्मनः शिरश्चिच्छेद। गुरुतरशोकेन वीरवरपत्नी दुहिता च नृपतेर्दीर्घायुष्यकामा स्वशिरश्चिच्छेद। राजा सर्वमेतदवलोक्य सपरिवारवीरवरस्य सात्त्विकमधिगम्य स्वजीवतः वीरवरे सपरिवारे जीविते राजाऽनुपलक्षितः सहसा स्वगृहमागतः। प्राप्तजीवनो वीरवरः पत्नीं पुत्रं दुहितरं स्वगृहं प्रस्थाप्य नृपद्वारमागतः। तमायातमालोक्य राजा वदति वीरवर! का रोदिति इति रहस्यं कथयेति पृष्टो ब्रूते देव! एका स्त्री दुःखिनी रोदिति तां निस्सार्य्यागतोऽस्मि। राज्ञोक्तं वत्स! स्वगृहं गच्छ। अथापरदिने राजा सर्व्वामात्यान् समानीय वीरवरस्य सपरिवारस्य सात्त्विकत्वं निगदितवान्। ततः सर्व्वे विस्मिता बभूवुः।

तदा वीरवरप्रसादात् राजा सार्व्वभौमो बभूव। वीरवराय बहुतरहयहस्तिधनजनमणिरत्नानि दत्त्वा शेखरदेशे राजा कृतः। वद राजन्! वीरवरशूद्रकयोर्म्मध्ये को महान् महासत्त्वः? राजा वदति शृणुरे वेताल! सेवकानामयमेव धर्म्मः यत् प्रभुकार्य्ये प्राणांस्त्यजन्ति। किन्तु शूद्रको नृपतिर्म्महान् महासत्त्वश्च यदेवंविधसाहसेन सेवकं परिवारसहितं जीवयित्वा राजा कृतः। नृपतावितिवादिनि वेतालः शिंशपावृक्षे पुनर्ल्लालाग।

इति चतुर्थो वेतालकथाप्रबन्धः।

---

## पञ्चमकथारम्भः।

अथ पुनरानीयमानो वेतालः कथामपरां कथयति। देव! चम्पकावती नाम नगरी पुरासीत्। तत्र विष्णुशर्म्मा नाम ब्राह्मणः प्रतिवसतिस्म। तस्य त्रयः पुत्रा बभूवुः। अथैकदा तेन यज्ञार्थं कूर्म्ममानेतुं पुत्राः प्रस्थापिताः। गत्वा तैः कूर्म्मोऽपि प्राप्तः। एको ब्रूते त्वमिमं गृहाण। अहं भोजनचञ्चुः कथमहं नयामि। स ब्रूते अहमपि नारीचञ्चुः कथमहं नयामि। अन्यो ब्रूते अहं शय्याचञ्चुः कथमिमं नयामि। इत्यन्योन्यं कलहायमानाः पुण्यसेननृपतेः स्थानं गत्वा ज्ञापयामासुः। ततो राजा तान् समाश्वास्य तन्निर्णयं चिकीर्षुः भोजनचञ्चोः अशनार्थं सूपकारमादिदेश।

अथ सूपकारे अन्नं नयति भोजनचक्षुः वदति श्मशान-समीपस्थलजातस्य धान्यस्य इदं मया न भोक्तव्यं इत्युत्थाय चलितः। अथ नारीचक्षोः स्थाने नानालङ्कारभूषिता वराङ्गना प्रस्थापिता। तामायातामालोक्य नारीचक्षुर्वदति एषा छागगन्धा अत्रागत्य मां कदर्थयति। नासां धृत्वा कथमपि तस्थौ। शय्याचक्षुः दिव्यशय्यायां सुप्त्वा प्रातर्वदति दुर्गतायां शय्यायां केशसहितायां सुप्त्वा मम गात्रं रक्तवर्णं जातम्। अथापरदिने राजा सूपकारमादिदेश। का वार्त्ता? तेनोक्तं देव! सत्यं भोजनचक्षुः। तत् नयमानमन्नं श्मशान-भूमिजमिति निन्दति। राज्ञोक्तं कथं त्वयि छागगन्ध? इति पृष्टा ब्रूते देव! मम मातरि मृतायां मत्पिता मां छाग-दुग्धेनाजीवयत्। तस्मात् सत्यमेवायं नारीचक्षुः। शय्या-चक्षोः पृष्ठे चिह्नं दृष्ट्वा ब्रूते सत्यमयं शय्याचक्षुः। तत-स्तेन राज्ञा त्रय एव द्विजपुत्रा भूषयित्वा स्वदेशं प्रस्था-पिताः। वद राजन्! एषां मध्ये को महान्? राजा वदति शृणु रे वेताल! शय्याचक्षुर्महान्। नृपताविति वादिनि वेतालः शिंशपावृक्षे पुनर्ललाग।

इति राज्ञः परिच्छेदं विज्ञाय जगतीपतेः।
व्यक्तवाचमयं कृत्वा शिंशपां कुणपो गतः॥

इति पञ्चमो वेतालकथाप्रबन्धः।

---

## षष्ठकथारम्भः।

अथ पुनः राज्ञानीयमानो वेतालः कथामपरां कथयति। देव! उज्जयिन्यां नगर्य्यां सुदर्शनो नाम नरपतिरासीत्। तस्य राज्ञो हरिस्वामी नाम ब्राह्मणः सकलगुणसम्पन्नस्तस्थौ। तस्य सोमप्रभा नाम कन्याऽभवत्। रूपयौवनवती पितरमब्रवीत्। तात! ज्ञानिविज्ञानिशूराणां मध्ये एकस्मै विवाहेन दातव्यम्। हसन् हरिस्वामी तद्वचनमङ्गीकृतवान्। ततस्तया माताभ्रात्रोरपि तद्वचनमङ्गीकारितम्। इत्येव काले चतुरङ्गसेनो नाम नरपतिः सुदर्शनं जेतुकामस्तत्राजगाम। तदा सुदर्शनः पात्रामात्यैः समालोच्य तस्य बलवतः प्रीतये विचक्षणं हरिस्वामिनं बहुतरसम्भारं दत्त्वा प्रस्थापितवान्। ततः सम्भारं प्राप्य हरिस्वामिनो वचनामृतेन तृप्तः चतुरङ्गसेनः स्वदेशमगमत्। तदानीमेको द्विजकुमारो हरिस्वामिनमब्रवीत्। तात! सोमप्रभा कन्या ते मम विवाहेन दीयताम्। तदा हरिस्वामी कन्याभिमतं तं अब्रवीत्। तत् अवगम्य द्विजपुत्रेणोक्तम्। तात! अहं महाज्ञानी इत्यात्मनः ज्ञानित्वमुपदर्श्य हरिस्वामिनो जामातृत्वमुपलभ्य विवाहसामग्रीमानेतुमाजगाम। हरिस्वामी च राजस्थानं गच्छन्नास्ते। तस्मिन्नेव समयेऽस्य पुत्रं देवस्वामिनं सोमप्रभा-पाणिग्रहणमपरद्विजकुमारो ययाचे। तदासौ भगिनी-समुदीरितवचनं निजगाद। स तत् श्रुत्वा आत्मनो

विज्ञानित्वमुपदर्शितवान्। देवस्वामिनः स्वीकारमासाद्य विवाहसामग्रीमानेतुमगात्। तस्मिन्नेव समये हरिस्वामिनो ब्राह्मण्याः स्थानेऽपरो द्विजकुमारः सोमप्रभापाणिग्रहणं ययाचे। तदयं दुहितुरुदीरितवचनं निगदितवती। तत् श्रुत्वाऽयं वदति। मातरहं महाशूर इत्यात्मनः शूरत्वमुपदर्शयामास। कन्यायाः मातुः स्वीकारमासाद्य विवाहसामग्रीमानेतुं गतः। अथ हरिस्वामी चतुरङ्गसेनस्य वृत्तान्तं सुदर्शने नृपतौ कथयित्वा हर्षात् राज्ञः प्रसादं प्राप्य स्वगृहमागतः। अथैकदा त्रय एव द्विजपुत्राः ससामग्रीकाः सोमप्रभापाणिग्रहणचिकीर्षवो हरिस्वामिनो गृहमागत्य मिलिताः। तदानीं हरिस्वामी सोमप्रभां न पश्यति। तस्य च पत्नी तामालोच्य रोदिति देवस्वामिनापि सा नावलोकिता। ततो हरिस्वामी सपरिवारो विलपंस्तिष्ठति। तदा ज्ञानी वदति हरिस्वामिन्! मा क्रन्द। तव कन्यां धूम्रनामराक्षसो नीत्वाऽस्ते विन्ध्याटव्याम्। तत् श्रुत्वा विज्ञानी वदति तथा रथमहं करिष्यामि, यथा विन्ध्याटवीमवलङ्घ्य सहसा येन रथेन जित्वा तामानेष्यामि। तदा शूरो वदति तात! राक्षसं जेतुमहं समर्थः। इति तथा कृत्वा रथारूढो राक्षसं विजित्य सोमप्रभां विजित्वा शूरो हरिस्वामिनो गृहमाजगाम। तमायातमालोक्य पाणिग्रहणचिकीर्षवो अन्योऽन्यं कलहायन्ते। हरिस्वामी च सर्व्वान् कृतोपकारानवलोक्य विस्मितस्तस्थौ। वद राजन्! सोमप्रभा

कस्य पत्नी भवति? राजा वदति। शृणु रे वेताल! सोमप्रभा शूरस्य पत्नी भवति नैतयोः। यतः पितुरङ्गीकारात् मातुरङ्गीकारो गरीयान्। राक्षसजयित्वाच्च। ज्ञानि-विज्ञानिनौ शूरस्य कार्य्यसिद्धये विधिना नियोज्य दत्तौ। इति प्रश्नच्छलेन नृपतेर्मौनमाहार्य्य वेतालः शिंशपावृक्षे पुनर्ललाग।

इति षष्ठो वेतालकथाप्रबन्धः।

---

## सप्तमकथारम्भः।

नृपप्रोक्तमिदं श्रुत्वा वेतालो विहसन् पुनः।
नृपस्कन्धात् द्रुतं गत्वा शिंशपातरुमालगत्॥

पुनरानीयमानो वेतालः कथामपरां कथयति। देव! ताम्रलिप्तिका नाम नगरी पुरासीत्। तस्यां प्रचण्डसेनो नाम राजा बभूव। तस्य राज्ञः प्रीतिभूमिः सत्यशीलो नाम कापालिकस्तस्थौ। अथैकदा तेन समं राजा मृगान्वेषणाय वनं प्रविवेश। अरण्यभ्रमणक्षुत्पिपासार्द्दितः श्रान्तः स नृपतिरासीत्। तदानीं अयं सत्यशीलो राज्ञः क्षुत्पिपासोपशान्तये दिव्यामलकीफलयुगलं दत्तवान्। राजा तत् फलं खादित्वा तृष्णाक्षुद्विहीनः शान्तो बभूव। तदामलकीफलद्वयदानेन स कापालिकः तस्य प्राणाधिक-प्रियो बभूव। तदानेन सह राजा सुखेन कालं नयमान-

स्तिष्ठति। अनन्तरं सिंहलद्वीपेश्वरो राज्ञः प्रचण्डसिंहस्य धैर्य्यमर्य्यादागाम्भीर्य्याणि श्रुत्वा कुवलयवतीं तनयां विवाहेन दातुमस्य स्थाने यानपात्रं दत्त्वा भद्रतरमनुष्यं प्रस्थापितवान्। तदा कुवलयवतीसौन्दर्य्यनिरीक्षणार्थं सत्यशीलमग्रं राजा प्रचण्डसिंहः समादिदेश। ततस्तेन सिंहलद्वीपादागतेन सह सत्यशीलः गच्छन्नास्ते। एतावति समये वायुवेगेन वहित्रं जले निमग्नमभवत्। ततः सत्यशीलो जले सन्तरन् रत्नशिखरशैलमेकमपश्यत्। तत्रस्थां पार्व्वतीप्रतिमां पूजयित्वा निष्क्रामन्तीमेकां कन्यां त्रैलोक्यमोहिनीं प्राप्तयौवनां सखीसमेताम् अवलोक्य सत्यशीलः कामपीड़ितोऽभवत्। इत्येव काले तस्याः सखीं समायातामालोक्य सत्यशीलः स्वाभिमतमुवाच। तत् श्रुत्वा सा ब्रूते पुरुषवर! त्वमत्र तिष्ठ। गत्वाहं तवाभिमतं स्वामिन्यै निवेदयामि। गत्वा तु सा सर्व्वम् अभिहितम्। सा कन्या सखीमुखात् सत्यशीलाभिमतमाकर्ण्य हसन्ती सखीमादिदेश। सखि! गत्वा वद समभ्यन्तरवर्त्तिनि सरोवरे स्नात्वा मत्समीपमायातु। ततो गत्वा सा तमब्रवीत्। हे पुरुषवर! मम स्वामिन्याः सरसि स्नात्वा त्वमागच्छ। ततोऽयमुल्लसितः सहसा सरसि निमज्य उत्थाय प्रचण्डसिंहस्य क्रीड़ावापीमागत्य तामेव ध्यायन् विलपंस्तिष्ठति। अथ प्रचण्डसिंहस्य पुरजनैस्तं सत्यशीलं तथाविधमवलोक्य राजनि निवेदितं—देव! यः सत्यशीलः कुवलयवतीसौन्दर्य्यनिरीक्षणार्थं भवता प्रस्थापितः सोऽयमागत्य

दीर्घिकातटे रोदिति। इति श्रुत्वा राजा विस्मितः सत्यशीलसमीपं गतः। दृष्ट्वा तमब्रवीत्।

सखे! किमेतत्। इति पृष्टो ब्रूते वृत्तान्तमामूलतः सर्व्वम्। अथ तदवलोक्य हर्षेण तेन राज्ञा सत्यशीलमादाय वहित्रमारुह्य तत्रैवाजगाम। गत्वाच तामालोक्य कामपीड़ितोऽभवत्। साऽपि प्रचण्डसिंहमवलोक्य कामशरपीड़िताऽभवत्। अथ तया बहुतरं उपकरणं दत्त्वा सखीं प्रस्थाप्य नृपतेरातिथ्यं कृत्वा पश्चादपरां प्रस्थाप्य स्वाभिमतं निवेदितवती। तत् श्रुत्वा राजा वदति। सखि! तव स्वामिनी मह्यमात्मानं दास्यति? गत्वा त्वमेव तद्वद। ततो गत्वेयं प्रचण्डसिंहस्य स्वाभिमतं स्वामिन्यै निवेदितवती। तत् श्रुत्वा सा ब्रूते। गत्वा वद अस्मै नृपतये अहमात्मानं दत्तवती। मयि राजा यथासुखमभिलषतु। स्वामिनीनिदेशात् सखी गत्वा तद्वचनं ज्ञापयामास। तदा राजा वदति सा मत्समीपमायातु। ततः सा लावण्यवती सलज्जा नृपसमीपमायाता। तामागतामालोक्य राजा ब्रूते। लावण्यवति! मह्यमात्मानं यदि त्वया समर्पितम् तदाहमपि सत्यशीलाय प्राणाधिकाय त्वां दत्तवान्। यदि मदीयवचनलङ्घनमाचरसि तदा दानभङ्गदोषेण त्वयि महापातकं भविष्यति। तदा सा कन्या दानभङ्गदोषमपहर्त्तुमाह। देव! तव या प्रीतिस्तामेव कुरु। ततो नृपतिनिर्द्देशात् सा कन्या सत्यशीलमावृणोत्। सत्यशीलस्तया लावण्यवत्या सह अशेषसुखमनुभवन् तस्थौ।

एतावति समये राजा सत्यशीलमवोचत्। तदामलकी-फलद्वयदानेन लावण्यवती प्राप्ता भवता, अपरमपि पुण्यं भवतो भविष्यति। सत्यशीलो वदति देव! तव प्रसादात् वा किं न मम भविष्यति। अथ लावण्यवती सत्यशील-मब्रवीत्। भो स्वामिन्! प्रचण्डसिंहो महाराजः स्वगृहं विहायाऽस्ते। अयं तावत् महान् दोषः। ततोऽहं ब्रवीमि एतत्-सरोवरे स्नात्वा स्वदेशं गच्छामः। राजन्! प्रचण्ड-सिंह-सत्यशीलयोर्मध्ये को महासत्त्वः? राजा वदति शृणु रे वेताल! राजा प्रचण्डसिंह एव महासत्त्वः। यत-स्तदामलकीफलद्वयं स्मृत्वा कामपीड़ितोऽपि तां त्रैलोक्य-मोहिनीमस्मै प्रादात्। नृपताविति वादिनि वेतालः शिंश-पावृक्षे पुनर्ललाग।

इति वदति महीपे मौनभङ्गं विहाय
कठिनचरित एष प्राप्तदा वृक्षशाखाम्।
अवसरदथ सहर्षो घर्घरापारभाजि
द्रुमतलमपि गत्वा तं पुनर्भूप एषः॥

सविस्मयो भूमिपतिर्गृहीत्वा स्वस्कन्धदेशे विनिविश्य रात्रौ।
ययौ परावृत्य महाबलं तं सान्द्रान्धकारे पथि विक्रमार्कः॥

इति सप्तमो वेतालकथाप्रबन्धः।

---

## अष्टमकथारम्भः ।

ततो गृहीत्वा कुणपं महीरुहात्
प्रवृद्धवेगेन व्रजन्महीपतिः ।
स तं समालोक्य नृपं कुतूहलात्
कथां विचित्रां पुनरेव भाषते ॥

अथ पुनरानीयमानो वेतालः प्रश्नान्तरमकार्षीत् । देव ! आसीत् शोभावती नाम नगरी । तस्यां यशःकेतु-नामा राजा गौरीभक्तस्तस्थौ । तत्र देवी स्वयमधिष्ठान-मकरोत् । तत्रनानादिग्देशादागत्य लोका भगवती-मर्च्चयन्ति । स्त्रियः सर्व्वा नानाविधमङ्गलं कुर्य्युः । अथै-कदा शुद्धपटनाम्नो नृपते र्दुहिता मदनसुन्दरी सखीजन-परिवृता भगवतीं पूजितुमाजगाम । एतस्मिन् समये तामालोक्य धवलो नाम राजकुमारः कामपीड़ितः पितरमब्रवीत् । तात ! यदि शुद्धपटनाम्नो नृपते स्तनया मदनसुन्दरी मम भार्य्या भवति तदाहं जीवामि । तत् श्रुत्वा धवलस्य पिता शुद्धपटमब्रवीत् । राजन् ! तव पुत्रीं मम पुत्राय देहि । तदा तेनोक्तं यं प्रति देवी प्रसीदति स तस्याः पतिर्भवति । तत् श्रुत्वा धर्म्मवान् पुत्रमब्रवीत् । पुत्र ! देवी यस्य प्रसन्ना भवति स तस्याः पतिर्भवति । इति रहस्यं श्रुत्वा महादेवीमाराधयितुमुपचक्रमे । तदा देवी प्रसन्ना तमुवाच वत्स ! मा साहसं कार्षीः । मदनसुन्दरी तव पत्नी भविष्यति । ततो लब्धवरप्रसादः स धवलो राज-

कुमारस्तस्याः पाणिग्रहणमाचर्य्य तया सह नानासुख-मनुभवन् तिष्ठति। अथैकदा शुद्धपटस्य पुत्रः श्वेतपटो मदनसुन्दरीं भगिनीं धवलञ्च भगिनीपतिमादाय पितु-रादेशात् स्वदेशं गच्छन्नास्ते। इत्येव काले गौरीमण्डप-मालोक्य धवलो वदति श्वेतपट! त्वमत्र मदनसुन्दरीमादाय चणं तिष्ठ। यावदहं गौरीं प्रणम्यागच्छामि। इत्युक्का गत्वा देवीं नत्वा च दैवप्रेरितखङ्गेन शिरश्छित्त्वा भग-वत्यै धवलोऽदात्। चणं विलम्ब्य तमनागतमालोक्य श्वेतपटो गत्वा तथाविधं भगिनीपतिं दृष्ट्वा स्वशिरश्छित्त्वा भगवत्यै दत्तवान्। ततो मदनसुन्दरी पतिभ्रातरावना-यातौ अवलोक्य गत्वा तत्र तौ विशिरस्कौ दृष्ट्वा गुरु-शोकेन स्वशिरश्छेत्तुमुपचक्रमे। ततः प्रसन्ना देवी ब्रूते, पुत्रि! मा साहसं कार्षी स्तव प्रसन्नास्मि वरं वरय। मातः! यदि वरो देय स्तदा मत्पतिभ्रातराविमौ जीवेताम्। देवी वदति सत्वरं स्कन्धे नियुज्यताम्। ततस्तया सम्भ्रमेण पति-स्कन्धे भ्रातुः शिरो भ्रातुः स्कन्धे पतिशिरो नियुज्य देवीवर-प्रसादेन जीवयितौ। प्राप्तजीवनामिमौ दृष्ट्वा मदन-सुन्दरी व्याकुलीभूता। वद राजन्! क स्तस्याः पतिर्भवतु को वा भ्राता? राजा वदति शृणु रे वेताल! सर्व्वाङ्गात् शिरःप्रधानं भवति। तस्मात् यस्य स्कन्धे पत्युः शिरो विद्यते स तस्याः पतिरितरो भ्राता।

सम्बन्धसन्देहविभञ्जनं तदा श्रुत्वा नरेन्द्रात् कुणपो प्रगल्भः।
त्यक्का नृपं वह्निमुखः प्रधावन् वेगात् पुनः प्रेततरुं जगाम॥

नृपताविति वादिनि वेतालः शिंशपामेत्य पुनर्ललाग ।

पश्चान्नृपस्तत्र गतोऽतिवेगात्
वृक्षादमुञ्चैव निपात्य पश्चात् ।
स्कन्धे पुनस्तं प्रविधाय गच्छन्
कथामपूर्व्वां कुणपो ययाचे ॥
वृत्तान्तं दुहितुरसीमवीरवाहो!
सोत्साहं नृप ! कथयामि मुञ्च कोपम् ।
सुमतिरसि नृपाणां श्रेष्ठ ! सत्वेन युक्तो
रचितरुचिरप्रश्नः श्रूयतां मन्मुखात्त्वम् ॥

इत्यष्टमो वेतालकथाप्रबन्धः ।

---

## नवमकथारम्भः ।

अथ पुनरानीयमानो वेतालः कथामपरां विचित्र कथयति । आसीत् शृङ्गारवती नाम नगरी । तत्र वीरवाहु र्नाम राजाऽभवत् । तस्य पत्नी पद्मावती नाम अभवत् । तस्य अनेन राज्ञा पुत्रैकः कन्यैका चोत्पादिता । साऽनङ्गवती एकद पितरमब्रवीत् । तात ! धैर्य्यगाम्भीर्य्यमर्य्यादान्विताय म विवाहेन दातव्यम् । तत् श्रुत्वा दुहितुरुदीरितवच उरीकृतवान् राजा । अथैकदा विपुलाकृतयो गुणवन्त वीराः धीराश्चत्वारो राजकुमाराः अनङ्गवतीं विवाहयि राजानमभ्यर्थयन्ति । एकः शूद्रो ब्रूते, देव ! गुणवा

शौर्य्यान्वितः श्लाघ्योऽहमस्मि। द्वितीयो वदति सर्व्वप्राणि-भाषाज्ञो महाधनिको वैश्योऽहम्। तृतीयो वदति शास्त्रशस्त्रपरायणः प्रख्यातवीर्य्यः शूरो राजन्यतनयोऽहम्। चतुर्थो वदति सर्व्वशास्त्रतत्त्वदर्शी धनवान् गुणयुक्तः षड्दर्शनवित् ब्राह्मणोऽहम्। राजा च तान् अनङ्गवती-विवाहयोग्यान् अवलोक्य एका कन्या कस्मै देया इति विस्मितस्तस्थौ। वद राजन्! साऽनङ्गवती विवाहेन कस्मै देया? राजा वदति शृणु रे वेताल! वैश्यशूद्रौ कन्या-विवाहे त्याज्यौ। ब्राह्मणश्च योग्यः। किन्तु क्षत्रिय एव क्षत्रियापाणिग्रहणे युक्तः। इति वादिनि नृपतौ वेतालः शिंशपावृक्षे पुनर्ललाग।

इति नवमो वेतालकथाप्रबन्धः।

---

## दशमकथारम्भः।

अथ राज्ञा क्रुद्धेन पुनरानीयमानो वेतालोऽपरकथां कथयति। देव! अनङ्गपुरनिवासिनो वीरकेशरीनाम्नो नृपतेर्देशेऽर्थदत्तनामा वैश्यस्तस्थौ। तस्य पुत्रो धन-दत्तो नाम बभूव। लावण्यवती च तनया भूता। तां सौन्दर्य्यशालिनीं प्राप्तयौवनामवलोक्य अर्थदत्तः पुत्रमब्रवीत्। भो धनदत्त! लावण्यवत्या योग्यवरमानय। पितु-

राज्ञया धनदत्तः सहसा गत्वा कन्दर्पनामानं वणिक्पुत्रं महाधनसर्व्वगुणान्वितं वरत्वे व्यवस्थाप्यागत्य पितरं ज्ञापयामास। एतावति समये क्रीड़ावापीं गतां सखी-समेतां लावण्यवतीमवलोक्य तत्पुरनिवासी धर्म्मदत्तनामा वणिक्पुत्रः कामपीड़ितोऽपि कथमपि स्वगृहं गतः। अथास्य सखा चिन्तामणिर्नाम तं तथाविधमवलोक्य ब्रूते। सखे! कथमेतादृशीमवस्थां गतोऽसि। पृष्टः सर्व्वं वृत्तान्त-मकथयत्। श्रुत्वा चिन्तामणिर्वदति सखे! त्वमतीव धन-वान् सर्वगुणान्वितश्च, तस्मात् त्वामवलोक्य लावण्यवती त्वद-धीनजीविता भविष्यति। तस्याः समीपं गत्वा आत्मानं दर्शयतु भवान्, अथ तदाज्ञया धर्म्मदत्तस्तामकथयत् लाव-ण्यवति! पाणिग्रहणचिकीर्षुरहं भवत्याः सा ब्रुते। भो धर्म्मदत्त! युक्तमुक्तं किन्तु पितुर्निर्देशादन्यस्मै वराय मां विवाहेन दातुं मम भ्राता कल्पितवान्। तत् कथं तत्वचनव्यभिचारं करिष्यामि? महाकुलसम्भवाया एता-वान् धर्म्मो न स्यात्। तत् भवान् यत्नं मा करोतु। तत् श्रुत्वा धर्म्मदत्तेनोक्तं साध्वी भवती यतः पितुर्भ्रातुः वचनं न व्यभिचारितम्, ततः प्रसन्नहृदयोऽस्मि। यदपरं वच्मि तद्भवत्यावश्यं कर्त्तव्यम्। एतस्य वचनामृतेन हृष्टया लावण्य-वत्या तस्मिन्नुक्तं भवतु—तत् करणीयम्। धर्म्मदत्तो वदति यस्यामेव रात्रौ तव विवाहो भविष्यति तस्यामेव स्वामिनाऽनुपभुक्तयौवनया सर्व्वालङ्कारभूषितया सखिज-नविहीनया भवत्या मत्समीपमागन्तव्यम्। मया एतस्याः

क्रीड़ावाप्या दक्षिणस्यां दिशि स्थातव्यम्। तत्र गत्वा मया सह सन्दर्शनं विधाय निजपतिसमीपं यास्यसि। तदङ्गीकृत्य लावण्यवती स्वगृहमागता, धर्म्मदत्तोऽपि गृहमागतः। अथैकदा तस्याः कन्दर्पवरेण सह विवाहो बभूव। अथ शय्यागतां तां लावण्यवतीमवलोक्य कामपीड़ितः कन्दर्पस्तस्याः स्तनोपरि हस्तं प्रसारितवान्। इत्येव काले लावण्यवती धर्म्मदत्ताभिमतवचनं कन्दर्पदत्तमब्रवीत्। कन्याभाषितं श्रुत्वा कन्दर्पः कामपीड़ितोऽपि तामादिदेश। गच्छतु भवती तन्मनोरथपूरणमाचर्य्य मया सह सुखमनुभविष्यतीति। तस्मादियं गच्छन्ती सर्व्वालङ्कारग्रहणार्थं क्व यासीति चौरेण पथि सा धृता। तदानीं कातरा सती सा चौरमिदमब्रवीत्। भो तात! धर्म्मदत्तस्य सत्यवचनेन बद्धास्मि। तस्मात् मां भवान् त्यजतु; सर्व्वालङ्कारमागच्छन्ती तुभ्यं दास्यामि। ततस्तां सत्यपरायणां विचिन्त्य चौरस्तत्याज। अथ तां गच्छन्तीं वटवृक्षाश्रितेन राक्षसेन त्वामहं खादिष्यामि इति धृता। ततः सा तमिदमब्रवीत्। तात! धर्म्मदत्तस्य सत्यवचनेन बद्धास्मि। तन्निर्वाहितसत्यामागच्छन्तीमत्र मां खादिष्यति भवान्। ततस्तां सत्यशीलामवलोक्य ब्रह्मराक्षसोऽपि मुमोच। अथ गत्वा सङ्केतस्थानमियं प्राप्तवती। तदा धर्म्मदत्तो लावण्यवतीं समायातामालोक्य तस्याः पादद्वये पुटाञ्जलिमकरोत् व्याजहार च। लावण्यवति! तव सत्यवचनेन प्रीतोऽस्मि। तत् कथमहं पापिष्ठस्तव सतीत्वनाशं करोमि।

ततः सत्वरमेव तत्र गत्वा स्वामिनोऽनुकूला भवतु सती। सुप्रीतेन धर्म्मदत्तेन प्रस्थापिता प्रागच्छन्ती ब्रह्मराक्षसमवोचत्। तात! अहमागतोऽस्मि, मदीयाभरणं चौराय दत्त्वा मम शरीरं खादतु भवान्। ततो ब्रह्मराक्षसस्तामतीव सत्यवादिनीमवगम्याब्रवीत्। लावण्यवति! प्रीतोऽस्मि, स्वगृहं गच्छतु भवती। ब्रह्मराक्षसेनापि त्यक्ता सा चौरसमीपं गत्वा वदति, चौर! ममाभरणमिदं गृह्णातु भवान्। चौरस्तामायातामतिसत्यपालयित्रीमवलोक्याब्रवीत्। लावण्यवति! तव प्रीतोऽस्मि सालङ्कारा स्वगृहं गच्छ। अनेनापि त्यक्ता स्वामिनः शय्यामागतवती। तामायातामालोक्य कन्दर्पोऽब्रवीत्। वणिक्पुत्रि! त्वमिदानीं मम प्रशंसनीया न भविष्यसि इत्युक्त्वा कामपीड़ितोऽपि तां त्रैलोक्यमोहिनीं मुमोच। वद राजन्! कन्दर्पचौरब्रह्मराक्षसधर्म्मदत्तानां मध्ये को महासत्त्वः? राजा वदति शृणु रे वेताल! कन्दर्प एव महासत्त्वः। यतः प्रथमेव लावण्यवत्याः सत्यरक्षणं धर्म्मदत्तस्य प्राणरक्षणत्वं विचिन्त्य कामाहतोऽपि तां त्रैलोक्यमोहिनीं पत्नीं स्वयमादिदेश। अथागतायामपि परपुरुषरतामिति तत्याज। नृपताविति वादिनि वेतालः शिंशपावृक्षे ललाग।

इति दशमो वेतालकथाप्रबन्धः।

---

# एकादशकथारम्भः।

क्रोधेन राज्ञा पुनरानीयमानो वेतालः प्रश्नान्तरमकार्षीत्। राजन्! काञ्चनपुरनाम्नि नगरे धर्म्मध्वजो नाम राजा बभूव। तस्य राज्ञः शृङ्गारवती मृगाङ्कवती तारावती नामधेयं महादेवीत्रयं रूपयौवनसम्पन्नमासीत्। अथैकदा क्रीड़ावापीतटावस्थिते मण्डपे स राजा शृङ्गारवत्या समं जगाम। तदानीं रममाणस्य राज्ञः कर्णादुत्पलमेकं अपतत्। तदुत्पलाघातेन शृङ्गारवती परां मूर्च्छां जगाम। राजा तद्विपत्तिशान्तये वैद्यप्रयोगमकरोत्। ब्राह्मणाय धनमदात् तत् पुण्यवशात् कथमपि शृङ्गारवती जीवितं लेभे। अथ परदिने राजा मृगाङ्कवत्या सह क्रीड़ाचिकीर्षुः तस्मिन्नेव समये मणिमण्डपे विरराम। ततश्चन्द्रस्य रश्मिना मृगाङ्कवत्याः शरीरं घूर्णित इव भूतम्। तदा राजा व्याकुलात्मा वैद्यप्रयोगे रशेषदेवब्राह्मणदानस्वस्त्ययनैः कथमपि जीवयतिस्म। तथा परदिने तारावतीमादाय तत्र गत्वा राजा क्रीड़न्नास्ते। तस्मिन्नेव समये दूरस्थैका दासी धान्यानि कुट्टयति। तेनैव मूशलशब्देन तस्या गात्रे विस्फोटोऽभवत्। येन विधिना मृगाङ्कवती जीवयिता तेनैव मतेन राजा तारावतीं जीवयतिस्म। वद राजन्! तासां मध्ये सुकुमारा राज्ञी का भवति? राजा वदति शृणु रे वेताल! तारावती सुकुमारा राज्ञी

यतोऽस्याः शरीरे मूषलशब्देनैव विस्फोटको जातः। नृपताविति वादिनि वेतालः शिंशपावृक्षे पुनर्ललाग।

इत्येकादशवेतालकथाप्रबन्धः।

---

## द्वादशकथारम्भः।

अथ राज्ञा पुनरानीयमानो वेतालः कथामपरां कथयति। देव! कुङ्कुमपुरनामधेयं नगरमेकमासीत्। तत्र देवस्वामी नाम ब्राह्मणः प्रतिवसतिस्म। तस्य पुत्रो हरिस्वामी नामाभूत्। सुता च विलासवती नाम्नी सा कन्या देवस्वामिना पार्श्ववर्त्तिने सोमशर्म्मनाम्ने विप्राय विवाहेन दत्ता। स च तया सह विविधसुखमनुभवंस्तिष्ठति। अथैकदा विलासवत्या सह सोमशर्म्मा सौधपृष्ठे रतिक्रीड़ामाचर्य्य निर्भरनिद्रां जगाम। इत्येव काले मदनवेशधरो नाम विद्याधर एक आगतः। सौन्दर्य्यनिर्ज्जितविद्याधरीं तां विलासवतीमपहृत्य विद्यापुरं जगाम। सोमशर्म्मा च तां नावलोक्य नानायत्नेनाप्यनासाद्य देशान्तरमगच्छत्। इतस्ततो भ्राम्यन् बभुक्षितः सन् पद्मनाभस्य मन्त्रिणो गृहमगमत्। पद्मनाभो यत्नेन ब्राह्मणीमब्रवीत्। वल्लभे! अयं ब्राह्मणो महात्मा यत्नेन पूजयितव्य इत्युक्त्वा राज्ञः स्थानमगमत्। मन्त्रिनिदेशात् मन्त्रिपत्नी भोजनाय

गृहमागच्छेत्यभ्यर्थितो ब्राह्मणो ब्रूते। मात! मया एकाकिना भोक्तव्यम्। यदन्नं मह्यं दातव्यं तत् दीयतां तदहं पुष्करिणीसमीपमागत्य भक्षयामि। तया निवारितोऽपि भक्ष्यद्रव्यमादाय पुष्करिणीं गत्वा तत् वृक्षमूले संस्थाप्य जलमानेतुं अगात्। इत्येव काले श्येनेनानीय खाद्यमानस्य सर्पस्य गरलं तत्द्रव्ये निपतितं जलमानीय ब्राह्मणस्तत् भक्ष्यद्रव्यं विषमिश्रितमज्ञानतो जग्ध्वा परलोकमगात्। ततः पद्मनाभः पत्न्यै चुकोप सा ब्रूते प्रभो! अज्ञात्वा मयि कोपं करोति भवान्। वहुतरयत्नेन मया निवारितो गृहे भोजनमकृत्वा द्रव्यमादाय लज्जया गतो मम को दोषः ततः पद्मनाभः परीतापमकरोत्। वद राजन्! सोमशर्म्मणो बधः किं श्येने किं वा मन्त्रिणि मन्त्रिभार्य्यायां वा मदनवेशधरे विद्याधरे वा भवति। राजा वदति शृणु रे वेताल! श्येनस्य सर्पएव भक्ष्य एतेन तत्र न बधः। मन्त्रिपत्न्या आदरेण नानायत्नेन. भोक्तुमभ्यर्थितः अन्यत्र भोक्तुं निवारित—स्तेन तस्यामपि न बधः। किन्तर्हि मदनवेशधरविद्याधरपद्मनाभमन्त्रिणोरेवास्य बधो भवति। एकस्य विलासवतीहरणात् अपरस्य मन्दादरत्वात्। इति वादिनि भूपे वेतालः शिंशपावृक्षे ललाग।

इति द्वादशवेतालकथाप्रबन्धः।

---

# त्रयोदशकथारम्भः।

अथ पुनरानीयमानो वेतालः कथामपरां कथयति। देव! उत्तरस्यां दिशि नयपालो नाम राजा बभूव। तस्य पद्मावत्यां पत्न्यां रूपयौवनसम्पन्ना शशिप्रभा नाम कन्यासीत्। एकदा सा चैत्रवलिमहोत्सवे सखीवृन्दपरिवृता क्रीड़ावापीं गता। तत्र च भट्टपुत्रो मनस्वामी नामस्तामालोक्य कामपीड़ितोऽभूत्। ततः पौरजनस्य पुत्रः समागत इति स्वसखीभ्यः श्रुत्वा क्रीड़ावापीं विहाय सा नदीमगमत्। भट्टपुत्रोऽपि तत्र गत्वा निमज्य जले स्थितः। अत्रान्तरे सखीभिः सह जलक्रीड़ामारब्धवत्यास्तस्याः केशविगलितकुसुमं स्रोतसा चलितमासाद्य निजदेहे तापोपशमनार्थमारोप्य एकदृष्ट्या तामालोक्य अनिर्वचनीयसुखमनुभवंस्तिष्ठति। सापि मनस्वामिनोऽतिसौन्दर्य्यमालोक्य त्वतिरागिणी बभूव। तत्र हस्तिनीशतं जलमज्जनार्थमगमत्। तदभ्यन्तरे हस्तिनीमेकां ऋतुमतीमालोक्य मत्तकुञ्जर एक आगत्य मिलितः। तद्भयात् शशिप्रभायाः सर्व्वे रक्षकजनाः पुरुषाः सख्यश्च सर्वास्तामपहाय पलायिताः। तदानीमेकाकिनीं स्थितां तामागत्य मनस्वामी निर्भरं परिरभ्य दूरं नीतवान्। करिणीषु गतासु मत्तकुञ्जरे च गते रक्षकपुरुषाः सख्यश्च शशिप्रभामाजग्मुः। तदा शशिप्रभा तं मनस्वामिनं ध्यायन्ती कथमपि स्वगृहं प्राप्तवती, मनस्वामी च तां ध्यायन् सर्व्वभोगानपहा-

य विषसाद। तथाविधमालोक्य शशिदेवेन मूलदेवाय उक्तं अयं मनस्वामी विरहव्याकुल इव लक्ष्यते। शशि-देवेन पृष्टो मनस्वामी सकलवृत्तान्तमदवत्। तत्श्रुत्वा उक्तं मनस्वामिन्! त्वमस्माभिः सहागच्छ तवाभिलासस्य सिद्धिमावां करिष्यावः। ततो मनस्वामी तयोः किङ्करकल्पो भूत्वा ताभ्यां सह स्थितः। एकदा मूलदेवेन मनस्वामिन मब्रवीत् भट्टपुत्र! तुभ्यमहं एकां विद्यां ददामि यया स्त्रीरूपं पुरुषरूपञ्च धार्य्यते। ततस्तामासाद्य मनस्वामी सहसा कुमारीवेशधरोऽभवत्।

अथ कुमारीवेशधरमादाय वृद्धब्राह्मणरूपं विधृत्य मूलदेवो धूर्त्तवरो नयपालनृपतेरन्तिकं जगाम। गत्वा ब्रूते महाराज! वृद्धब्राह्मणोऽहं इयं कुमारी मदीया पुत्र-वधू भविष्यति अस्याः प्रतिज्ञातमिति उज्जयिनयां गत्वा यः पुरुषो भगवन्तं महाकालमर्च्चयित्वा आयाति तस्यैवाहं पत्नी भवामि। एतेन हेतुना पुत्र उज्जयन्यां भगवन्तं महाकालं अर्च्चयितुं गत्वास्ते। स यावदायाति ताव-दियं कुमारी भवतो दुहितुः शशिप्रभाया मन्दिरे तिष्ठतु तेनैवास्या रक्षा भवति अहमस्या रक्षणाक्षमो वृद्धः। ततो राज्ञा स्वीकृतं तावदियं शशिप्रभया सह सुखेन तिष्ठतु। तदा शशिप्रभाया गृहे तां समर्प्य स वृद्धब्राह्मणः स्वगृह-मगमत्। तदारभ्य कुमारीवेशधरो मनस्वामी शशिप्रभया सह नानाश्रद्धालापं कुर्व्वंस्तिष्ठति। एकदा शशिप्रभां अब्रवीत्। सखि! तवाहं प्राणसमा सखीभूता इदानीं

त्वामहं चिन्ताकुलामिव पश्यामि तदवश्यं त्वया मयि दुःख-कारणं अभिधातव्यमेव । तया पृष्टा सा वदति । सखि ! मनस्वामी—विरहिताहम् । तत् श्रुत्वा तां अभ्यधात् । तं भट्टपुत्रमहमानीय त्वां दर्शयिष्यामि । तत् श्रुत्वा शशि-प्रभा ब्रूते । सखी त्वं मम प्राणाधिका तत्कथं परिहास-वचनेन मयि दुःखमुत्पादयसि । तत् श्रुत्वा कुमारीवेश-धरो ब्रूते । आः ! कथमेतत् वदसि त्वं चक्षुषी निमील्य स्वं तिष्ठ तत स्त्वं भट्टपुत्रं पश्यसि । यत्नातिशयेन सा चक्षुषी-निमील्य स्थिता । सहसैवायं कुमारीवेशधरो विद्याप्रभावेन भट्टकुमारोऽभवत् अवदत् च शशिप्रभे ! त्वदधीनजीवनमना-शमिवागतं पश्य । तदा सा मनस्वामिनमवलोक्य हर्षिता विस्मिता च तस्थौ ततस्तेन स्वामिना सह अशेषसुखमनु-भवन्तौ । अथ शशिप्रभाया मातुर्भ्रातुर्नृपमन्त्रिमदनस्य पुत्रो विजयसेनः कनकपुरनृपकन्यां मृगाङ्कवतीं विवाहयित्वा स्वगृहमागतः । तस्मिन् काले मदनसेन-मन्त्रिणा राजनि विज्ञाप्य शशिप्रभा नीता, तदानीं कुमारी-वेशं धृत्वा शशिप्रभया सह मनस्वामी गतः ; तत्र मन-स्वामिनं कुमारीवेशधरमवलोक्य विजयसेनः कामपीड़ितो ऽभवत् । पितरमभ्यवादीत् तात ! यद्यहं शशिप्रभायाः प्रियसखीं विवाहयामि तदा जीवामि नान्यथा । ततः पुत्रमरणमनुचिन्त्य मदनसेनः भगिनीपतिं नयपालराजा-नमवादीत् । राजा ब्रूते मन्त्रिन् । कथमेतत् दुष्करं कर्म्म शक्यं स्यात् । वृद्धब्राह्मणस्य पुत्री महाकालमर्पयित्वा अस्याः

पाणिग्रहणं करिष्यति तदानीमहं किमुत्तरं दास्यामि अतोऽशक्यमेतत्। मन्त्री ब्रूते कुमारश्चित्रसेनो मम पुत्रः सम्प्रति म्रियते त्वमया किमु वक्तव्यं विशेषतस्य पुत्रमरणे ममापि मरणं भविष्यति। राजा वदति वृद्धब्राह्मणस्योत्तरं तदा भवता दातव्यं—मन्त्री वदति भवतु मयैव तस्य शान्तिरुत्पादयितव्या। तदानीं तां कुमारीं मदनसेनाय मन्त्रिणे समर्पितवान्। विजयसेनश्च तस्याः पाणिग्रहणं चिकीर्षुरभवत्। कुमारी वदति मन्त्रिपुत्र! उज्जयन्यां गत्वा महाकालं समभ्यर्च्य मम पाणिग्रहणमाचर यद्येवं न करोषि तर्हि तवोपरि प्राणांस्त्यक्ष्यामि मम प्रतिज्ञैव। तत् श्रुत्वा विजयसेनः सहसा महाकालमर्च्चयितुमुज्जयनीमगमत्। अथ मृगाङ्कवत्या सहायं कुमारीवेशधरो मनस्वामी तदा विद्याप्रभावेन पुरुषो भूत्वा नानासुखमनुभवंस्तिष्ठति। अथ कियति काले गते मनस्वामिना मनसेति चिन्तितं मृगाङ्कवतीमादाय मूलदेवस्य स्थानं गच्छामि। स धूर्त्तवरो अवसरं प्राप्य जेतुं शक्नोति। अथ मृगाङ्कवतीमादाय गत्वा मूलदेवाय सर्व्वं वृत्तान्तमवादीत्। तत् श्रुत्वा मूलदेवो हसन् मृगाङ्कवत्या समं मनस्वामिनं तत्र संस्थाप्य विद्याप्रभावेन वृद्धब्राह्मणो भूत्वा शशिदेवं पुरुषवेशधारिणमग्रतः कृत्वा नयपालनृपतेरन्तिकं जगाम। देव! कुमारी दीयतां ममैषः पुत्रो महाकालमर्च्चयित्वा तस्याः पाणिग्रहणं चिकीर्षुरागतः। तं ब्राह्मणकुमारमवलोक्य चिन्तितो मन्त्रिणमानीय वदति मन्त्रिन्! पूर्व्वमेतन्मया भणि-

तम्। अधुना यथोचितोत्तरं दत्त्वा तोष्यताम् अयं वृद्धब्राह्मणः। तत् श्रुत्वा मन्त्री आह। देव! सा ते कुमारी सूनुकल्या कस्मै विवाहेन दत्ता। इदानीमपरकन्या तव पुत्राय दातव्या एतत् श्रुत्वाह मूलदेव। राजन्! मरिष्यामि यद्यशतेनापि निवारितो न स्याम्। वृद्धब्राह्मण स्तस्य नृपतेरुपरि पुत्रेण सह मर्त्तुमुद्यतोऽभवत् ततो राजा तस्य चरणे पतित्वा-ऽवदत्। तात! रक्ष मां या कन्या तव पुत्रेणेष्टा सैव मया तस्मै दातव्या। ततो धूर्त्तवरो मूलदेवो शशिदेवम-ब्रवीत् पुत्र! विनीतस्य नृपतेर्वचनं शृणु। तदा शशि-देवेनोक्तं तात! यद्येतच्छ्रोतव्यं तदा राजा निजकन्यां शशिप्रभां मह्यं ददातु। तत् श्रुत्वा राजा ब्रह्मवधभयात् शशिप्रभां कन्यां द्विजपुत्राय ददौ ततस्तामादाय मूलदेव-शशिदेवौ स्ववासमाजग्मतुः तदानीं मनस्वामी वदति तात मूलदेव! मम प्राणाधिका शशिप्रभा भवतानीता ममाभि-लषितसिद्धिर्भूता शशिदेवेनोक्तं किमहो! राजा मह्यं शशिप्रभां दत्तवान्। तस्याः पाणिग्रहणं मया कर्त्तव्यं ततः कथमयोग्यां एतादृशीं वदसि। मनस्वामी वदति इयं शशिप्रभा मम भार्य्या पुरा मया यतः परिणीता तत् कथमेतादृशीं वदसि। शशिदेवो वदति। भद्र! चौरिकयास्यां गन्धर्व्वविवाहः कृतस्तेन किं स्यात्। मह्यं राजा स्वेच्छया दत्तवान्। तौ शशिदेवमनस्वामिनौ अन्यो-ऽन्यं कलहं कुर्व्वाणौस्तः। वद राजन्! शशिप्रभा कस्य भार्य्या भविष्यति। राजा वदति शृणु रे वेताल! मन-

स्वामिना यत् कृतं तल्लोकद्वयविरुद्धमेव। पित्रा सा शशिदेवाय दत्ता, ततः सा शशिदेवस्यैव भार्य्या भविष्यति। इति वदति भूपाले स वेतालः शिंशपावृक्षे पुनर्ललाग।

त्रयोदशवेतालकथाप्रबन्धः।

---

## चतुर्दशकथारम्भः।

अथ राज्ञा पुनरानीयमानो वेतालः कथामपरां कथयति। देव! कनकपुरनाम्नि नगरे महामना यशोधनो नाम राजा बभूव। तस्य राज्ये महाधनो रत्नदत्तो नाम वणिक् तस्थौ। तस्य सर्व्वलक्षणसम्पन्ना कन्यैका भूता। तस्या नामकरणदिवसे ये ये समागतास्ते ते तां यौवनहीनामपि समालोक्य कामपीड़िता बभूवुः। अतस्तस्या उन्मादिनी नामाभूत्। अथ तस्यां रूपयौवनसम्पन्नायां स रत्नदत्तो यशोधननृपतेरन्तिकं गत्वेदं वदति देव! मम कन्या उन्मादिनी द्वात्रिंशल्लक्षणोपेता भवतामेव योग्या, अतस्तामानयतु देव! तत् श्रुत्वा राजा हर्षितः स्त्रीलक्षणवेदिनं ब्राह्मणमेकं तां उन्मादिनीं लक्षणवतीं द्रष्टुं प्रस्थापितवान्। अथ तेन नृपनिदेशात् रत्नदत्तस्य गृहं गत्वा उन्मादिनीं सर्व्वलक्षणसंयुक्तां त्रैलोक्यमोहिनीं विद्याधरीमिव अवलोक्य ब्राह्मणेन चिन्तित यद्येनां

उन्मादिनीं सर्व्वलक्षणसम्पन्नां राजानं ज्ञापयामि तदैनां कन्यामासाद्य राजा सर्व्वमहादेवीं त्यक्ष्यति, तथा मुक्तवाह्य-चिन्तोऽपि भविष्यति। अतो निर्लक्षणां ज्ञापयामि ततो राजा च तां न नीतवान्। अतो रत्नदत्तः सेनानीरण-धवलाय दत्तवान्। अथैकदा मधुमासे स राजा पौरजनान् अवलोकयन् प्रदोषे इतस्ततः परिभ्रमति तस्मिन्नेव काले सा उन्मादिनी तं राजानं दृष्ट्वा मनसा चिन्तितवती, यशोधनोऽयं मां निर्लक्षणां ज्ञात्वा न नीतवान्। तदिदानीं दिव्यालङ्कारं परिधाय आत्मानं दर्शयामि। ततो राजा अत्युच्चतरं स्थानमारुह्य तामालोक्य कामपीड़ितो धावक-मपृच्छत् केयमिति। तेनोक्तं देव! सैषा रत्नदत्तस्य दुहिता उन्मादिनी; या सेनानी रणधवलेन विवाहिता। श्रुत्वा राजा स्त्रीलक्षणवेदिनं ब्राह्मणं प्रति क्रुद्धा कथमपि निजा-न्तःपुर अधिगम्य विहितसर्वभोगत्याग स्तामेव ध्यायं स्तस्थौ। ततो धावकेन मनसेति चिन्तितं, राजा रणधवलस्य पत्नीमवलोक्य कामानलदग्धो भूतः। तदहं रणधवलं ज्ञापयामि यथा स तामानीय ददातीति चिन्तयित्वा स रणधवलसमीपं गत्वा तं सर्ववृत्तान्तं निवेदयामास। अथ तच्छ्रुत्वा रणधवलः सहसा गत्वा राजानमब्रवीत्। देव! उन्मादिनीं तुभ्यमहं समर्पयामि। राजा तद्गतमनापि लोकधर्म्मं विचिन्त्य ब्रूते। स एव बन्धु र्यो-निवारयतिं पापात् सएवामात्यश्च—तद्भवता कथमेतत् मयि भण्यते। रणधवलो वदति देव! यदि तां भवान् न

स्वीकरोति तदाहं यस्मै कस्मैचिद्दास्यामि। तथापि राजा तां न नीतवान्। तस्या विरहेण राजा परलोकमगात्। ततो रणधवलोऽपि हाहेति कृत्वा प्राणां स्तत्याज। रणधवले मृते सा उन्मादिनी च मृता। वद राजन्! यशोधनो महासत्त्वः किं वा रणधवलः, अथवा उन्मादिनी। राजा वदति शृणु रे वेताल! सेवकाना मयमेव धर्म्मः यत् प्रभुकार्य्ये प्राणांस्त्यजति। स्त्रियः स्वभावतः पतिवर्त्म-धर्म्मगाः। किन्तु राजा यशोधनो महासत्त्वः यतस्तामासाद्यापि परलोकमनुचिन्त्य प्राणांस्तत्याज। इति वदति राज्ञि वेतालः शिंशपावृक्षे पुनर्ललाग।

इति चतुर्द्दशवेतालकथाप्रबन्धः।

---

## पञ्चदशकथारम्भः।

अथ पुनरानीयमानो वेतालः कथामपरां कथयति। देव! रत्नवती नाम नगरी पुरासीत्। तत्र चन्द्रप्रभो नाम राजा बभूव। तस्य राज्ये देवस्वामी नाम तस्थौ। तस्य पुत्रो हरिस्वामी नामाभवत्। स पितुः सर्व्वस्वं द्यूतेन विनष्टं कृत्वापि द्यूतं न त्यजति। अथ शास्तिकेन धृत्वा नानायत्नेनापि किञ्चिन्नासाद्य दण्डेन ताड़ितो मूर्च्छामासाद्य पतितः। ततः शास्तिकेन भयाज्जले निमग्नं

तं ज्ञात्वा अनुपलक्षितः स्वगृहमगमत्। स हरिस्वामी जलं प्राप्य कथमपि प्राप्तजीवनो भूत्वा द्यूतपरित्यागार्थं प्रतिज्ञामकरोत् गृहञ्च तत्याज। स तदारभ्य भगवन्तमर्चयित्वा कृतफलमूलाहारः कालं नयमान आस्ते। अथ तं प्रणतं भगवान् महाकालोऽब्रवीत्। भो द्विजपुत्र! प्रीतोऽस्मि त्वामहं सुखमनुभावयामि। तच्छ्रुत्वा विप्रेणोक्तं भगवानेव प्रमाणं, मया किं वक्तव्यम्। ततो निद्राकाले अस्य मस्तके हस्तो न्यस्तः। ततो हरिस्वामी निद्रागतो भूत्वा स्वप्ने दिव्यनगरमासाद्य रूपनिर्जितत्रिभुवनविद्याधरीशतेन नानासुखमनुभूय परां प्रीतिमासाद्य प्रबुद्धोऽयं स्वप्नमिव नीतवान्। प्रतिदिनमेवं स याति पश्यति च। ततोऽयं हरिस्वामी निद्रागतः भगवन्तमभ्यधात्। भगवन्! यदि मय्यनुकम्पा विद्यते तदा मन्त्रमेकं मह्यं ददातु भवान्। महाकालेनोक्तं, वत्स! निजपरविभागो यस्य पुरुषस्य नास्ति तस्मिन्नेव मन्त्रसिद्धिर्भवति। तथापि द्विजो नानायत्नमाचरति। निर्बन्धातिशयेन भगवान् वदति। द्विज! सिप्रातटं गच्छ, तुभ्यमहं मन्त्रं दास्यामि। ततस्तस्या जले निमग्नाम्नौ प्रवेशमाचर्य्य अग्निजलाभ्यां समभागी भूते तव मन्त्रसिद्धिर्भविष्यतीति मन्त्रमदात्। अथ प्राप्तमन्त्रो हरिस्वामी सहसा नगरमेकमपश्यत्। तत्र विद्याधरीमेकां विवाह्य तया सह नानासुखमनुभवन् कालमनैषीत्। तस्यां बहवः पुत्राः कन्याश्चानेनोत्पादिताः। अथैकदा सर्पेण दष्टा सा विद्याधरी परलोकं गतवती। ततस्तां श्मशाने नीत्वा हरिस्वामी

विलपं स्तिष्ठति। एतावति समये विद्याधर एकस्तं द्विजं शोकेन विलपन्तमवलोक्याब्रवीत्। द्विज! यद्येषा न जीवति तदस्याः शोकेन तवापि जीवनं न दृश्यते। अतः स्वीयमर्द्धायुरस्यै दातुं स्वीकुरु। तदा विद्याप्रभावेन वयमेनां जीवयामः। तथा विद्याधरस्य वचनमाकर्ण्य हरिस्वामिना स्वीकृतम्। सा विद्याधरी च मन्त्रप्रभावेण जीविता। स च तया सह गृहमागत्य सुखेन तस्थौ। अथ तेन मन्त्रेण जलादुत्थायाग्निप्रवेशाच्चमोऽभवत्। अथ पुनर्गत्वा तमेव भगवन्तं मन्त्रसिद्ध्यर्थमभ्यर्थयत्। तदानीं महाकालोऽपि मन्त्रसिद्धिहीनोऽभवत्। वदतु देव! कथं महाकालो मन्त्रहीनोऽभवत्। राजा वदति शृणु रे वेताल! शिष्यदोषेण गुरुरपि दोषवान्। अतः सोऽपि मन्त्रहीनोऽभवत्। इति नृपते र्मौनभङ्गं कृत्वा वेतालः शिंशपावृक्षे पुनर्ललाग।

इति पञ्चदशवेतालकथाप्रबन्धः।

---

## षोड़शकथारम्भः।

अथ पुनरानीयमानो वेतालः कथामपरां कथयति। देव! कर्णाटपुरनाम्नि नगरे सूर्य्यप्रभो नाम नरपतिरासीत्। तस्य राज्ये धनदत्तो नाम वणिक् प्रतिवसति। तेन हिरण्य-

वती—नामधेयायां पत्न्यां धनवती नाम कन्योत्पादिता । अथैकदा धनदत्तस्य सर्व्वस्वं दैववशात् विनष्टमभवत् । अभाववतोऽयं धनदत्त कष्टार्द्दं ज्ञात्वा परलोकमगात् । अथोत्तमर्णैनास्य पत्नी पुत्रीसमेता बद्धा तदानीं हिरण्यवती मनसेति चिन्तितवती । अहमिह किमर्थं बद्धा निवसामि । यदिमां धनवतीं आदाय मदीयपतिप्रियसुहृत्तमस्य गृहे तिष्ठामि । स मे स्नेहात् पालनमाचरिष्यतीति विचिन्त्य दुहितरमादाय रात्रौ गच्छन्तीं तां शून्यस्थितैक चौर कन्यामवलोक्याब्रवीत् । मातरिमां कन्यां मह्यं देहि । मम बहुतर धनमिह विद्यते तन्नयतु भवती । श्रुत्वा सा ब्रूते वत्स ! शून्यस्थितस्य भवतोऽस्याः पाणिग्रहणेन किं भविष्यति । चौरो वदति मातर्मदीयधनेन भद्रतरपुरुषस्य बीजक्रयमाचर्य्य तेनैव पुरुषेण सममिमां क्रीडयिष्यसि । तदुत्पन्नेन चेत्तज-पुत्रेण समं परलोकसौहृद्यं कर्त्तव्यम् । तच्छ्रुत्वा हिरण्यवती तेन निर्द्दिष्टसुवर्णान्यादाय चौराय धनवतीं विवाहेन दत्तवती । विवाहं ज्ञात्वा चौरः सहसा परलोकमगात् । हिरण्यवती पुत्रीसमेता ताम्रलिप्तिकानिवासिनः पतिसुहृत् तमस्य गृहं गतवती । तां मित्रपत्नीं पुत्रीसमेतामवलोक्य विविधादरेण स्वगृहं नीत्वा पत्न्यां समर्पितवान् । पत्युर्निर्द्देशात् सा तां प्रसारवीथिकां नीत्वा क्रयविक्रयार्थं प्रस्थापितवती । तया नियुक्ता सा पुत्री तत्र स्थिता । एकदा प्रसारवीथिकास्थितां धनवतीं दृष्ट्वा सोमस्वामी नामैको ब्राह्मणः कामपीड़ितोऽभवत् । धन-

वतीच तं द्विजं मनोहरमालोक्य मदनविह्वला मातर मब्रवीत्। हिरण्यवती चौरस्य वचनं स्मृत्वा विविधादरेण वीजविक्रयार्थं ब्राह्मणमनुरुद्धवती। तत् सङ्गमेन च धनवत्याः पुत्रैको जातः। तदा च कात्यायनी देवी राजद्वारि बालकस्य रक्षार्थं हिरण्यवतीमादिश्य नृपमभ्यगात्। वत्स! भवानद्य यं शिशुं प्राप्नोति तमिवानीय पुत्रं करिष्यति। धनवत्याः पुत्रो जातः। हिरण्यवती च देवीनिर्देशाद्राजद्वारि तथाविधं कृत्वा स्थितवती। राजा प्रातः समये प्राप्तं तं पुत्रं कृत्वा पत्न्यै समर्पितवान्। अथास्या धनवत्याः पुत्रो वर्द्धमानः सकलनीतिशास्त्राभ्यासं कुर्व्वन् तिष्ठति। अथ राजा वृद्धः परलोकमगमत्। तत् पुत्रोऽयमिति मत्वा सर्व्वैं रमात्यैरवनीपतिः कृतः। तेनैकदा गयायां गत्वा दत्तस्य पिण्डस्य ग्रहणार्थं हस्तत्रयमुत्थितमभूत्। एको हस्तश्चौरलक्षणान्वितः। अपरो हस्तो विप्रलक्षणान्वितः। तृतीयोऽवनीपतिचिह्नान्वितः तानवलोक्य कस्मै पिण्डा देया इति सन्देहाकुलहृदयः कुमारस्तस्थौ। वदतु देव! चौरविप्रनरेन्द्राणां मध्ये कस्तस्य पिता भवति। राजा वदति शृणु रे वेताल! चौर एव तस्य पिता भवति। नृपताविति वादिनि वेतालः शिंशपावृक्षे ललाग।

इति षोड़शवेतालकथाप्रबन्धः।

---

## सप्तदशकथारम्भः ।

अथ पुनरानीयमानो वेतालोऽपरप्रश्नमकार्षीत् । देव! चित्रकूटनाम्नि नगरे चन्द्रावलोको नाम राजा बभूव । तस्य महादेवीन्दुमती नामाभवत् । तया सह राजा सुखमनुभवं स्तिष्ठति । एकदासौ राजा द्यूतेन सर्व्वस्वं विनष्टं कृत्वा सुदुःखितः हयमारुह्यारण्यानीं प्रविश्य श्रान्तः सन् मनोहरं सरोवरमवलोक्य तत्र स्नात्वा जलपानं कृत्वा मृणालादिकं खादित्वा सरस्तीरे तिष्ठति । इत्येवकाले दृष्टिं निक्षिप्य मुनेराश्रममपश्यत् । तत्र गत्वा त्रैलोक्य-मोहिनीं काञ्चित् मुनिकन्यामालोक्य कामपीड़ितोऽभवत् मुनिकन्याच तस्मै आतिथ्यं चकार । ततो राज्ञा आदरेण कन्या पृष्टा भो वरवर्णिनि! किमर्थमेकाकिनी अरण्ये-वससि । तस्मात् मां त्वदधीनजीवनं भजस्व । राजन्! एतस्मिन्नेव क्षणे मुनिराश्रममागमिष्यति । तस्मान्मया सह कथनेनालं-संवृतो भूत्वा तिष्ठतु। पश्चात् तवाभिलषितं कर्त्तव्यं, कन्यावचनाद्राजान्यत्र गतः । कन्या तं राजानं ध्यायन्ती विद्यते, मुनिरागत्य तां चिन्तामधिगम्य पप्रच्छ । ततः सा नम्रमुखी भूत्वा लज्जितापि नृपतेरागमनं कथयामास । तत् श्रुत्वा हर्षितेन मुनिना राजानमानीय कन्यामभ्य-दात् । अथ तां प्रेयसीमादाय मुनिं प्रणम्य स्वदेशं प्रति जगाम । अथ कन्यासहितं रात्रौ वटवृक्षतले यक्षो राजानमवोचत् । त्वं मया अद्य खादितव्यः । राजा ब्रूते

कस्त्वम्। तेनोक्तं यक्षोऽहम्। राजाह, तुभ्यमहं अत्र बलिं दास्यामि, मां मुञ्च। यक्षेणोक्तं मदभीप्सितं बलिं दास्यसि? राजा वदति आज्ञापयतु देव! यक्षेणोक्तम्। कुमारबलिं दास्यसि। राजा वदति केन विधिना बलिर्देयः। यक्षो वदति। स्वेच्छया यदि कुमारो मरणमिच्छति तस्य चरणौ माता दधाति, भवता यद्यात्मना तस्य शिरश्छिद्यते तदैव हि तुष्टो भवामि। राजा तदेव स्वीकृत्य स्वदेशमागत्य एवंविधं बलिं कुतोऽपि नासाद्य चिन्तितो बभूव। अथ सप्तदिवसातीते कुमारेण केनचित् तस्य पिता भणितः। पित! नृपकल्याणार्थं मां बलिं देहि। अथ मातृपितृभ्यां यत्नसहस्रेणापि निवारितः कुमारो ब्रूते यद्येवं युवाभ्यां न कर्त्तव्यं तदाहं आत्मघाती भविष्यामि। ततो राजा तान् सर्व्वान् गृहीत्वा यक्षस्य समीपं गत्वा तेन विधिना कुमारबलिं दातुमुद्यतो भूत्वा ब्रूते कुमार! निजकल्याणार्थमिष्टदेवतास्मरणं कुरु। तत् श्रुत्वा कुमारो हसति। त्रिकालज्ञेन यक्षेणापि कुमारस्य हास्यं आकर्ण्य उच्चैरट्टाट्टहासमकारि कुमारबलिश्च न अग्राहि। देव! कुमार यक्षयोर्हास्यकारणं वद। राजा वदति शृणु रे वेताल! कुमारेण मनसेति चिन्तितं——मम मातापितृभ्यां मे चरणकेशा धृताः। अयं राजा स्वयं खड्गमादाय बलिं दातुमुद्यतोऽस्ति। तथाप्येवं वदति निजकल्याणार्थमिष्टदेवतास्मरणं कुरु इत्यस्य कुमारस्य हास्यकारणम्। यक्षोऽपि तत्-

कारणमवगम्याचिन्तयत्। कुमारोऽयं योग्यो हसति। एतावति विपत्काले को मे रक्षाक्षमो भवेदिति हसित्वा प्रीतो भूत्वा कुमारं परोपकारिणं स्वगृहं प्रस्थापयामास।

इति वादिनि भूपाले वेतालः शिंशपावृक्षे पुनर्ललाग।

इति सप्तदशवेतालकथाप्रबन्धः।

---

## अष्टादशकथारम्भः।

अथ पुनरानीयमानो वेतालः कथामपरां कथयति। देव! दक्षिणस्यां दिशि ब्रह्मपुराभिधेयं नाम नगरं पुरासीत्। तत्र विष्णुस्वामी नाम ब्राह्मण उवास। सोऽतीव धनहीनः; तस्य चत्वारः पुत्रा बभूवुः। कियता कालेन विष्णुस्वामिनि मृते ते चत्वारः प्राणरक्षार्थं मातुलालयमगमन्। मातुलोऽपि तान् दरिद्रानवलोक्य न सम्भावयामास। ततस्ते मृत्युमुद्यमं चक्रुः। ततः कोऽपि सुजन स्तान् मरणान्निवर्त्तयन्नब्रवीत्। ब्राह्मणकुमारा युयं विद्याभ्यासं कुरुत। तदा सर्व्वसुखं भविष्यति। तच्छ्रुत्वा ते मरणविधिं परित्यज्य विद्यासिद्ध्यर्थं गतवन्तः। अथैकदा कृतविद्यास्ते सर्व्वे मिलित्वा अन्योऽन्यं जिज्ञासा मारेभुः। प्रथमेनोक्तं अहं मृतास्थिसञ्चयनविद्यां जानामि। अपरेणोक्तं अहं शोणितसञ्चारविद्यां जानामि। तृतीयेणोक्तं नखकेश-

इत्तमत्यथविद्यां जानामि। चतुर्थेनोक्तं जीवयितुं जानामि। विद्यापरीक्षाचिकीर्षवो व्याघ्रास्थीनि समासाद्य व्याघ्रं जीवयामासुः। सर्व्वे ततः प्राप्तजीवनेन व्याघ्रेण चत्वारो भक्षिताः। वद राजन्! तेषां मध्ये कः वधभागी भवति। राजा वदति शृणु रे वेताल! जीवनदाता वधभागी भवति। नृपताविति वादिनि वेतालः शिंशपावृक्षे पुनर्ल्लगाग।

इत्यष्टादशवेतालकथाप्रबन्धः।

---

## ऊनविंशकथारम्भः।

अथ पुनरानीयमानो वेतालः कथामपरां कथयति। देव! कलिङ्गविषये यज्ञस्थलं नामधेयं नगरमासीत्। तत्र यज्ञसोमनामा ब्राह्मणस्तिष्ठति। तस्य ब्राह्मणी सोमदत्ता। तस्यामनेन ब्रह्मस्वामी नाम पुत्र उत्पादितः। सच सर्व्वशास्त्रतत्त्वज्ञो भूत्वा दैववशात् पञ्चत्वमगात्। ततस्तत् पितरौ बहुविधं विलपन्तौ बन्धुजनसहितौ तमादाय श्मशाने सत्कारार्थमाजग्मतुः। इत्येव काले श्मशानवासी योगी तं द्विजकुमारशरीरं सर्व्वशास्त्रवेत्तारं मनोहरकलेवरमालोक्य करुणस्वरेणोच्चैः क्रन्दितवान्, परमकौतुकेन नर्त्तितवांश्च। सहसोत्थाय

योगेन जीर्णंस्वशरीरं परित्यज्य मृतस्य द्विजकुमारस्य शरीरं प्रविवेश । कुमारे समुत्थिते तत्पितरौ परां प्रीति मासादितवन्तौ। सर्व्वे बन्धुवर्गाश्च हर्षिता बभूवुः । ब्रह्मस्वामी प्राप्तजीवनः सर्व्वभोगं परित्यज्य योगं ध्यायं स्तस्थौ । श्मशानवासी योगी कथं चक्रन्द कथं वा ननर्त्त तत्कारणं वदतु देव ! राजा वदति शृणु रे वेताल ! चिरकाल मुपार्जितं शरीरं त्यक्तव्यमितिचक्रन्द । जीर्णशरीरं विहाय सर्व्वगुणाधारद्विजशरीरं प्राप्तव्यमिति ननर्त्त ।

इत्युनविंशतिवेतालकथाप्रबन्धः ।

---

## विंशकथारम्भः ।

अथ राज्ञा पुनरानीयमानो वेतालः कथामपरां कथयति । देव! दक्षिणस्यां दिशि विक्रमबाहुर्नाम राजा बभूव । तस्य राज्ये पुष्पवती नाम नगरी स्थिता । तत्र जितकुवेरविभवो बणिक् निधिपतिर्नाम सार्थवाह स्तस्थौ । तस्य कामसेना वासवदत्ता क्षमावती चम्पावती चतस्रः पत्न्यो बभूवुः । तासु तेन रत्नदत्त-मणिदत्त-कुमारदत्त-कनकदत्ताश्चत्वारः पुत्रा उत्पादिताः । तत्र रत्नदत्तेन गान्धर्व्वशास्त्रमभ्यस्तं, तत्समो नृत्यगीताभिज्ञो महीमण्डले कोऽपि नाभूत्। मणिदत्तेनास्त्रविद्याभ्यस्ता। तत् समोऽस्त्रविन्मही-

मण्डले कोऽपि नाभूत्। कुमारदत्तेन नानाशास्त्रकथाऽभ्यस्ता। तत्समो धीमान् महीमण्डले कोऽपि नासीत्। कनकदत्तेन नानानीतिशिक्षाऽभ्यस्ता। तत्समो नीतिमान् नासीत्। ते चत्वारः सर्व्वगुणान्विताः सौन्दर्य्यनिर्जितमन्मथाः कामिनीजनमनोहारिणः विश्वविख्यातपौरुषाः सपत्नीकाः सकलसुखमनुभवन्त स्तस्थुः।

कियति काले गते तेषां पिता लोकान्तरमगमत्। अथ विधिवशात् तैश्चतुर्भिः आत्मस्त्रीकलहात् पृथकत्वमनुभवद्भिः प्रीत्या सर्व्वाणि कोटिसंख्यधनानि विभक्तानि। किन्तु दिव्यरत्नत्रयं सामान्येन स्थितम्। निधिपतिदत्तेन पुरा राजाभिहतः यदि चतुर्णां पृथकत्वं स्यात् तदा मत्सखा विक्रमवाहुरिदं रत्नत्रयं यस्मै ददाति स एव प्राप्स्यति। इति पितुर्व्वचनं स्मृत्वा नृपसन्निधौ ते चत्वारो जग्मुः। राजा च बन्धुपुत्रान् दृष्ट्वा तानुवाच। भो बन्धुपुत्राः! किमर्थमत्रा गताःस्थ? पृष्टास्ते पितुर्व्वचनं राज्ञे ज्ञापयामासुः। राजा रत्नत्रयमालोक्य विस्मितो भूत्वा इदमचिन्तयत्। दिव्यरत्नत्रयमद्भुतं बन्धुपुत्राणां मध्ये यो मतिमान् तस्मै दातव्यम्। भो सुहृत्पुत्राः! मया अत्र रत्नत्रयपरिच्छेदः क्रियते न भवद्भि स्थातव्यं तत्श्रुत्वा ते वदन्ति। यदाज्ञापयतु देव! तथाचास्माभिः स्थातव्यमिति एतावन्तो वा प्राणाः कस्य सन्ति यो देववचनलङ्घनं करिष्यति। राजा वदति एतानि रत्नानि सामान्येनात्र सन्तु।

कुसुमपुरनगरे रूपवती नामधेया त्रैलोक्यमोहनी-

याकृतिर्वेश्या विद्यते। सा लक्षमेकमादाय एकरात्रि-पुरुषेण सह क्रीड़ां करोति। यदि लक्षसहस्रं प्राप्नोति तथापि न परदिनं रमते। तया वेश्यया सह यो द्वि-रात्रिक्रीड़ां कर्त्तुं शक्नोति, तस्य तानि रत्नानि भवन्ति। तत् श्रुत्वा ते ऊचुः। देव! केनाद्यतो गन्तव्यं तमाज्ञा-पयतु। राजा वदति। ज्येष्ठानुक्रमेण गमनमनुभवति। ततो रत्नदत्तोऽनेककरितुरगमणिमाणिक्यबहुविधसामग्रीं सुवर्णरत्नानि च गृहीत्वा पुरन्दरकात्मजः कुसुमपुरं प्राप्य-नृत्यगीतवाद्यादिभिर्महारम्भमकरोत्। लक्षसंख्यसामग्रीं दत्त्वा विचक्षणं पुरुषमेकं रूपवत्याः परिचयार्थं प्रस्था-पयामास। ततः ससामग्रीकं तमालोक्य विस्मिता वेश्या चिन्तितवती। अहो! एतावदुत्सुकता कस्यापि न दृष्टा। तदवगृह्य च वचनामृतेन तं समाश्वासयामास। ततः प्राप्तप्रश्रयो विचक्षणस्तामब्रवीत्। रूपवति! कामदेव-कल्पेन पुरुषेण रत्नदत्तेन सह क्रीड़तु। रूपवती वदति, धन्याहं यतस्तस्यानुरागो मयि भूतः। तद्भवान् तमादाय शीघ्रं समागच्छतु। यदि तस्य महापुरुषस्य क्रीड़ायोग्या भवामि, तदा लक्षमेकं दत्त्वा मया सह स क्रीड़िष्यति। इत्युक्त्वा तया प्रस्थापितः स रूपवत्या वचनं रत्नदत्ताय कथयामास। ततो हर्षितो रत्नदत्तो रात्रौ रूपवत्याः समीपं जगाम। तया सह विषयक्रीड़ामाचर्य्य द्वितीय-दिने क्रीड़ार्थं स्वाभिप्रायं जगाद। रत्नदत्तस्य यत् नृत्य-गीतादिकं द्रष्टुं श्रोतुञ्च देवगन्धर्व्वकिन्नरापि पृथिव्या-

मवतरन्ति, तत् श्रुत्वा सा रूपवती क्रन्दति । तदा रत्नदत्तो वदति प्राणाधिके ! कथमकारणं रोदिषीति पृष्टा ब्रूते प्राणेश्वर! भवत्सदृशेन पुरुषवरेण सह मम क्रीड़ा परदिवसे न भविष्यति इति रोदिमि । तेनोक्तं कथमेतत् । वेश्या ब्रूते । लक्षमेकं गृहीत्वा एकरात्रौ क्रीड़ामहमाचरामि । कुमारेणोक्तं अपररात्रे क्रीड़ार्थं अहं लक्षरत्नचयं दास्यामि । वेश्या ब्रूते लक्षसहस्रेणापि द्वितीयरात्रे क्रीड़ामहं न करोमि । ममैषा प्रतिज्ञा । नानायत्नेनायं निरस्तो रत्नदत्तः सुदुःखितो मूर्च्छित इव बभूव । अथ वीरबाहुनृपतिं समासाद्य ज्ञापयामास, देव ! कोऽपि तया सह द्वितीयरात्रिक्रीड़ाशूरो न भविष्यति । अथ मणिदत्तो बहु-मणिरत्नविभवः कुसुमपुरं गत्वा तत्पुरनृपतेर्दर्शनमकरोत् । राज्ञाच अस्य दर्शनमधिगम्य बहुतरमानं कृत्वा सम्भाषितः । अथ विपक्षनृपतिरेकः कुसुमपुराधिपतिं जेतुमागत्य समस्तसैन्यकरितुरगं जित्वा राजानमपि जेतुमायाति । तदानीमनेन मणिदत्तेन प्रतिज्ञातं देव ! विपक्षनृपतिः संग्रामे मया जेतव्य इति प्रति-ज्ञाय गत्वा तं विजित्य नृपते रग्रत आजगाम । तदारभ्य तत्समः कर्त्ता कुसुमपुरे कोऽपि नाऽभूत् । अथ नाना पौरुषं प्रकाश्य तया वेश्यया सह कन्दर्पक्रीड़ामकरोत् । एतावता पौरुषेणापि द्विरात्रिक्रीड़ाक्षमो नाभूत् । तदा सुदुःखितो भूत्वा वृत्तान्तं वीरबाहुं ज्ञापयामास । अथ कुमारदत्तोऽपि तत्र गत्वा तया सह क्रीड़ामाचर्य्य द्वितीय-

रातिक्रीडार्थं मन्दारवनत्रयलोभकथामप्यकथयत् । तथापि तया निरस्तः स्वदेशमागत्य राजनि ज्ञापयामास। अथ कनकदत्तोऽपि मनसाऽचिन्तयत् । पराक्रमवन्तोऽतिसुन्दराः भ्रातरो विफलमनोरथा भूतास्तत् मया गत्वा किं कर्त्तव्यम् । अथ आरम्भे प्रयोजनाभावः । तदहं किञ्चित् द्रव्यमादाय एकसेवको भूत्वा तस्याश्चेष्टां निरूपयामि । इति विचिन्त्य तत्र गत्वा तच्चेष्टां जिज्ञासुरास्ते । एतस्मिन् समये सा रूपवती वेश्यासहस्रेण परिवृता राजपथे गच्छन्ती, विद्यते, तां रूपवतीं विद्याधरीमिवालोक्य कनकदत्तेन पश्चाद्दासीवेश्यैका पृष्टा । वद केयं याति । तयोक्तं कुमार ! रूपवती नाम इयमेव वेश्या । कनकदत्तो वदति कुत्र गच्छन्तीयम् ? सा ब्रूते । नगरैकान्ते शिवायतने पुण्यशरीरा नामैका तपस्विनी गुरुरस्या विद्यते । तस्याः सेवामियं सततमेव करोति । तदा कनकदत्तोऽचिन्तयत् मदीयकार्य्यसिद्धिर्भूतेति । तदेव हि ता मनुगच्छामि । अथ तां तापसीं संभ्याष्य रूपवत्यां स्वगृहमायातायां कनकदत्तः पुण्यशरीराया दर्शनमकरोत् ननामच । तया पृष्टः को भवान्? स वदति, देशान्तरीयो राजपुत्रोऽहम्। तापसी वदति । वत्स ! किमर्थमागतोऽसि ? तेनोक्तं, मातः ! तव सेवां कर्त्तुमागतोऽस्मि। तयाच वचनामृतेनाश्वास्य कनकदत्तः प्रस्थापितः । किन्तु रूपवती यदा याति, तदायं अन्यत्र गत्वा तिष्ठति। अथ षण्मासमेवं गते तया तुष्टया पृष्टः। वत्स ! किमर्थं मदीया सेवा महती क्रियते ? भवतः प्रीतास्मि

तन्नवानभीप्सितं वदतु, तन्मया कर्त्तव्यम् । तेनोक्तं, मातस्त-न्मया रहसि वक्तव्यम् । ततः सा परिवारं दूरं प्रस्थाप्य पुनर्वदति, वत्स ! कथ्यतां निजाभिलषितं, कनकदत्तो वदति । मातर्द्दिनान्ते या रूपवती ते सेवां कर्त्तुमायाति सा लक्षमेकं गृहीत्वा पुरुषेणैकरात्रिं क्रीड़ां करोति । लक्षसहस्रेणापि परदिनक्रीड़ां कथं न करोति, तत्कारणं ज्ञातुमहं तव सेवां करोमि । सा ब्रूते, किं सा समायाता ? मया प्रष्टव्या त्वमत्र मण्डपैककोणे संवृतो भूत्वा रूपवतीमुखात् श्रोष्यसि । ततोऽयमतिप्रीतोऽभवत् ।

अथ परदिने रूपवती तापसीगृहमागता । तामालोक्य कनकदत्तस्तद्गृहकोणे सुगूढ़ेन लुक्कायितः । रूपवती पुण्य-शरीरायाः सेवां कृत्वा तया सह अशेषालापं कुर्व्वाणाव-तिष्ठते । अथ प्रस्तावावसरमासाद्य तापसी रूपवतीमाह । पुत्रि ! परम्परया मया इति श्रुतं लक्षमेकमादाय दिव्य-पुरुषेण सह भवती एकरात्रिं क्रीड़ति, लक्षसहस्रेणापि तेन सह द्विरात्रिक्रीड़ां न करोति । तत्कारणमहं श्रोतुमिच्छामि । त्वयावश्यं कारणं वक्तव्यम् । तदैवाहं प्रीता भवामि । रूपवती ब्रूते देवि ! तत् गोप्यं वक्तुं न शक्नोमि । तापसी वदति । पुत्रि ! यदि त्वया तावत् कारणं मयि न वक्तव्यं तदाहमप्रीता भवामि । रूपवती ब्रूते, शृणु मातः ! तापसी वदति । सावधानास्मि कथयतु भवती । रूपवती कथयति । मातः ! यदि मया तत्कारणं अव श्यं कथितव्यं तदा सत्यं कुरु । तत् कुत्रचित् न

वक्तव्यमिति। तापसी वदति। पुत्रि! यदि तत् कारणं कुत्रचित् कथयामि, तदा सत्यभ्रष्टा भवामि। रूपवती ब्रूते। शृणु मातः! तापसी वदति सावधानास्मि,। कथयतु भवती। रूपवती कथयति।——पद्मपुरनामनगरे प्रचण्डसेनो नाम राजा तस्थौ। तस्य राज्ञः सान्धिविग्रहिकस्य चित्रदत्तनाम्नी दुहिताहं गौरीव्रतपरायणा। ततः सा देवी प्रसन्ना वरमदात्। पुत्रि! त्वं मत्प्रसादात् सौभाग्यवती भविष्यसि, योग्यमेव पतिं प्राप्स्यसि। जातिस्मरा च भविष्यसि।

इत्येवकाले तस्य राज्ञः पुत्राय प्रतापसेनाय मत्पिता मां विवाहेन दत्तवान्। देवीवरप्रसादेन तस्याहं प्राणेभ्योऽपि गरीयसी भूता। राज्ञा विपक्षनृपतिनिराकरणार्थं मत्पतिः प्रस्थापितः। स मया विना क्षणमपि न जीवति। तत्रापि मया सह जगाम। अथ बलवता विपक्षनृपतिना समासाद्य मत्पतिः त्रासितः। सहसा भयान्मां प्राणाधिकामपि परित्यज्य देशान्तरमकरोत्। तस्मिन् समये हस्तिनीस्कन्धसमारूढेन विपक्षेणाहं प्राप्ता। चिन्तितं पुरुषं धिगस्तु, यतः सर्व्वलक्षणसम्पन्नां परित्यज्य निर्गतः। मां त्रैलोक्यमोहनीमासाद्य विपक्षनृपतिः कथं त्यक्ष्यति। तत् मम सतीत्वनाशेन भवितव्यमिति। विचिन्त्याहं प्रतापसेनं ध्यायन्ती प्राणांस्तत्याज। मरणसमये मया करिणीमुखमालोकितम्। तेन कारणेन करिणी भूताहम्। करिण्यपि भूत्वा प्रतापसेनं ध्यायन्ती कालं नयामि। मत्तकुञ्जरा मां क्रीडार्थं आयान्ति।

तांस्तानहं निरासं करोमि, कमपि न भजामि। अथैकदा मत्तकुञ्जरो भूत्वा प्रतापसेनः समागतः। तमहं जातिस्मरत्वात् ज्ञात्वा भजामि। तदारभ्य तेन सह नानासुखमनुभवन्ती तिष्ठामि।

इत्येव काले गजबन्ध एक स्तत्रागत्य मिलितः। तदानीमपि स गजरूपाश्रितः प्रतापसेनः सहसा मां विहाय वनान्तरमगमत्। ततोऽनेन नीत्वाहं राज्ञे दत्ता। सोऽपि राजा मां प्रधानकरिणीमकरोत्। अथैकदा राजा मामारुह्य मृगान्वेषणाय गतः। तदानीमहं मत्तकुञ्जररूपपतिं ध्यायन्ती प्राणांस्तत्याज। मरणकाले मया मृगी समालोकिता। तेनाहं मृगीभूता, तत्रापि प्राप्तयौवना कमपि मृगं न भजामि, तमेव ध्यायन्ती तिष्ठामि। अथैकदा तस्मिन्नरण्ये भ्रमन्ती मृगमेकमपश्यत्। पुण्येन मया ज्ञातः, सएव प्रतापसेनः गजत्वं विहाय मृगत्वमासादितवान्। तमहमभजम्। तदारभ्य तेन सह नानासुखमनुभवामि। अथ दावाग्निना तस्मिन् वने दह्यमाने मां विहाय सोऽपि वनान्तरं गतः। अहमन्यवनमागन्तुमशक्ता तं ध्यायन्ती च प्राणांस्तत्याज। मरणसमये तत्र सरस्तीरे मयैका चक्रवाकी दृष्टा। तेनाहं चक्रवाकी भूता। तत्र जाता कमपि न भजामि, तमनुध्यायन्ती तिष्ठामि। अथ विधिवशात् स प्रतापसेनो मृगत्वं विहाय चक्रवाकत्वमासाद्य मत्समीपमागतः। तेनागतेन सह नानासुखमनुभवन्ती तिष्ठामि। एकदा कुसुमपुराग्रगतसरो-

वरमागताऽहम्। तत्र व्याधसमूहं दृष्ट्वा सहसा मां त्यक्त्वा पलायितः। तदाहं व्याधेन प्राप्ता तं ध्यायन्ती जीवितं जहौ। मरणसमये कुसुमपुरनिवासिन्यो जलक्रीड़ां कुर्व्वाणा वरेण्या वारवनिता मयाऽलोकिताः। तेनाहमपि वारवनितायोनौ जातास्मि। ततो यौवनं प्राप्य मया चिन्तितम्। पुरुषा निर्द्दयाः स्नेहहीनाः। यतश्चतुर्षु जन्मसु मामनुरक्तां विहाय प्रतापसेनः पलायितः। इति कोपेन मया प्रतिज्ञा कृता—एकवारं भोक्तव्यः पुरुषो, द्वितीयरात्रे न भोक्तव्यः। मातः! कारणमेतत्। तापसीं रहस्यं श्रावयित्वा प्रणम्य वेश्यागणपरिवृता स्वगृहमागता।

अथ कियता कालेन कनकदत्तस्तापसीं प्रणम्य वेशधरः रूपवतीं गृहीत्वा प्रतिवेश्यागृहं बभ्राज। किन्तु कयापि सह न रमते। सर्व्वासु वेश्यासु कथयति पद्मपुराधिपतिप्रचण्डसेनस्य पुत्रः प्रतापसेनोऽहं विक्रमदत्तस्य कन्या मम पत्नी स्थिता। मम प्राणाधिकां विपक्ष-भयात् तामपहायाऽहं पलायितः। तदा सा मृता करिणी भूता। अहमपि मृता गजत्वमासाद्य तया सह विविधक्रीड़ां कृत्वा गजबन्धकारिभयादपहायान्यत्र वने गतः। सा बन्धनस्थापि मां ध्यायन्ती जीवनं तत्याज। तदा मृगीभूता। तदा तस्याः शोकेन मृगत्वमहमासाद्य तया सह क्रीड़ां कृत्वा दावाग्निभयादहं अन्यत्र गतः। सा मां ध्यायन्ती चक्रवाकी भूता। तदाहमपि मृतश्चक्रवाकत्वमासाद्य तया सहाऽशेषक्रीड़ामकार्षम्।

एकदा तामादाय कुसुमपुरसरोवरमागतः। व्याध-भयादहं पलायितः। सा व्याधेन प्राप्ता मां ध्यायन्ती मृता मानुषयोनौ जन्म लब्धवती। तदाहमपि चक्रवाकशरीरं विहाय मानुषो भूत्वा तामेव ध्यायंस्तिष्ठामि। पटे तत् सर्व्वं लिखित्वा सर्व्वासां वारवनितानां हस्ते दत्त्वा तत्रैव नगरे तिष्ठामि। अथ रूपवती परम्परया वार्त्तामेतामाकर्ण्य कनकदत्तमात्मभवनं नीत्वा समस्ततत्त्वं विज्ञाय कनकदत्तस्य कण्ठे लगित्वा उच्चैश्चक्रन्द। ततः सर्व्वे लोका विस्मिता बभूवुः। ततो रूपवत्या सहानुरागः कनकदत्तस्य बभूव। तदारभ्य तया रूपवत्या समधिगत-प्रतापसेनानुरागया मुक्तप्रतिज्ञया सह कनकदत्तो विविधसुखमनुभवं स्तिष्ठति। ततो दिन-कतिपयं विलम्ब्य कनकदत्तो रूपवतीमवादीत्। भो वल्लभे! मम पुष्पवती नाम नगरी इन्द्रस्यामरावतीव, तत्र गत्वा भवत्या प्राणाधिकया सह सुखमनुभवामि। रूप-वती ब्रूते प्राणेश्वर! तवाज्ञा मया सदैव कर्त्तव्या। ततस्तां सकलाहृत्तिसमेतां रूपवतीमादाय स्वदेशमागत्य रहसि तं वीरबाहुं सकलमेव वृत्तान्तं कथयामास। तत् श्रुत्वा राजा मनसेति व्यचिन्तयत् किमाश्चर्य्यमेतत्! अनेकविच-क्षणा अस्या हिराचिक्रीड़ाक्षमा न भूताः। अयं इमां गृहीत्वा समायातवान्। तदहं इमं कनकदत्तं सान्धि-विग्रहिकं करोमि। ततस्तानि रत्नानि त्रीणि कनक-

दत्ताय राज्ञा दत्तानि। बहुतरं प्रसादं दत्त्वा सान्धिविग्रहिकश्च कृतः।

वेतालो वदति वद राजन्! प्रतिजन्मनि तया निजपति र्मृतः, सा जातिस्मरापि कथं कनकदत्तं न ज्ञातवती। यतः तस्य मायाप्रबन्धः सफलोऽभूत्। राजा वदति शृणु रे वेताल! प्रतिजन्मनि तया निजपतिना सह क्रीड़ाऽचरिता। तेन पुण्येन तया निजपतिरवज्ञातः। वेश्याकुले जन्म लब्ध्वा पापिष्ठा भूता। अन्य-पुरुषयोगात् जातिस्मरापि निजपतिं विस्मृतवती। नृपतेर्मौनभङ्गं विधाय वेतालः शिंशपावृक्षे पुनर्ललाग।

इति विंशतितमो वेतालकथाप्रबन्धः।

---

## एकविंशकथारम्भः।

अथ पुनरानीयमानो वेतालः प्रश्नमकार्षीत्। देव! कुण्डिनपुर-नाम-नगरमासीत्। तत्र परमधार्मिको राजा श्वेतकेतुर्बभूव। तस्य प्राणसमसखा शङ्करदत्तो नाम वणिगासीत्। तेन सार्थवाहेन तत्पुर-निवासिनो मणिदत्तस्य दुहिताऽनङ्गसेना परिणीता। अनया सह शङ्करदत्तो नानासुखमनुभवन् तिष्ठति। एकदाऽयं श्वेतकेतु-नृपतौ कुटुम्बं समर्प्य अनङ्गसेनाया त्रैलोक्यमोहिन्या-

शकुनिपरिरक्षणाय सहस्रशः पदातिकान् दत्त्वा निर्व्वन्ध-माचर्य्य समभिव्याहारपात्रैर्व्वाणिज्यार्थं देशान्तरमगमत्। द्वादशसु वर्षेषु नागतः। तदा तद्विरहे अनङ्गसेना कृष्णपक्षस्य चन्द्र-लेखेव जाता।

अथ मदनचतुर्द्दशी समागत्य मिलिता। तस्यां कन्दर्प-माराधयितुं बहुशः पुरुषाश्च यान्ति। ततो मणिदत्तस्य पत्नी दुहितरमब्रवीत्। पुत्रि! शङ्करदत्तस्य आगमनाय मदनार्च्चनमाचर। ततस्तान् पदातिकान् समादाय दासीशत-परिवृता मन्मथं पूजयित्वा पितृगेहं समा-गच्छन्ती विद्यते। ततः शशिदेवो धूर्त्तवर स्तमालोक्य कामपीड़ितोऽभवत्। कथमपि पद्मावती-नगरीं गत्वा मूल-देवाय वृत्तान्तमवादीत्। मूलदेवो ब्रूते। सखे! शशिदेव! मा कातरो भव। सा येन भवता प्राप्यते तन्मया कर्त्तव्यम्। शशिदेवेनोक्तं मित्र! पदातिकास्तां रक्षन्ति अतोऽपि पितरौ रक्षणमपि न त्यजतः। राजा श्वेतुकेतुरस्या रक्षणाय सय-त्नस्तत् कथमेतत् शक्यं भवति? मूलदेवो वदति। तव का चिन्ता? मित्र! अत्र नगरे कामकल्पलता नाम कुट्टिनी विद्यते। साऽरुन्धतीमपि चालयितुं समर्था। तस्मादावां गत्वा तस्यां निवेदयावः। इत्यालोच्य गत्वोक्तवन्तौ तयोक्तं शशिदेवमूलदेवौ! अनङ्गसेनामहमपि जानामि। किन्तु दुष्कर एव कर्म्म,प्रवेशो भवतु, तथापि गत्वा भवतोः प्रीतिर्व्वाचनीया। किन्तु युवां गत्वाऽनुपलक्षितौ स्थास्यथः। अहं शिवसेवां कुर्व्वती स्थास्यामि। निज-प्रभुत्वं प्रकाश्य

पश्चादुपायं करिष्यामि। ततः परिचारिकाद्वयमासाद्य तत्र गत्वा शिवसेवामाचरन्ती विद्यते। सर्व्वैः कथ्यते सर्व्वज्ञेयं तापसीति श्रुत्वा अनङ्गसेना मातरमब्रवीत्। मातः! जामातुर्व्वार्त्तां सर्वज्ञास्थाने गोचरीकुरु। सा ब्रूते पुत्रि! भद्रं स्मारितम्। ततः सा गत्वा सामग्रीं दत्त्वा प्रणम्य इदमभ्यधात्। मातः! सर्वज्ञे! मम जामाता शङ्करदत्तो द्वादशभिर्वर्षैर्नायातः कथमस्य तत्त्वं? मयि कथ्यतां, तदा तुभ्यमहं बहुतरधनं दातव्यम्। तापसी वदति। पुत्रि! मयाऽवश्यं वक्तव्यम्। अद्य गृहं गच्छ। विचिन्त्य मया तस्य तत्त्वं किञ्चिद्वक्तव्यम् किन्त्व-नङ्गसेनामपि आनेष्यसि। अथ परदिने दुहितरमादाय सपत्नीको मणिदत्तः समागतः। सामग्रीं दत्त्वा प्रणम्यो-वाच। मातः! सर्वज्ञे! ऽनङ्गसेनामादाय भवत्याः स्थाने सप-त्नीकोऽहमागतः। शङ्करदत्तस्य वदतु वार्त्तां भवती। मातः! शङ्करदत्तः केन प्रकारेण समागच्छतु तद्वदतु भवती। सा ब्रूते मणिदत्त! मन्त्र एको विद्यते। किन्तु सुदुर्लभो दातुमशक्यश्च श्रुत्वा तौ वदतः! तापसि! यदि भवत्या स मन्त्रो न दीयते तदानङ्गसेनेयं तद्विरहे मरि-ष्यति। तद्दास्याः शोकेन आवामपि मरिष्यावः। तद्वध-भागिनी भवती भविष्यति। इत्युक्त्वा पुनस्तस्याश्चरणयो-र्निपतितः। ततः सा ब्रूते। तस्मिन्मन्त्रेऽशक्यमेकमस्ति। यदि तव पुत्री तत् करोति तदैव मन्त्रसिद्धिर्भवति। तदा ताभ्यामुक्तम्। भगवति! यामाज्ञामाचरति सा करिष्यति।

ततो मणिदत्तपत्नीं रहसि नीत्वा निगदितवती। शृणु निभृतमण्डपं कृत्वा तत्रानङ्गसेना समानीयताम्। इयमन्वं पुरुषमेकं पश्यन्ती मन्त्रं जपिष्यति। सुरतसम्भोगं तत्र मानयिष्यति। तेन पुरुषेण प्रतिदिनमेकरूपं धर्त्तव्यम्। स पुरुषोऽपि शङ्करदत्तसदृशो यदा भवेत्, तदैव तस्यागमनं भविष्यति। तच्छ्रुत्वा सा ब्रूते। स्वामिनं गत्वा पृच्छामि। तया पृष्टो मणिदत्तो ब्रूते। वल्लभे! येनोपायेन अत्र जामाता समायाति तमेव कारयतु भवती। तदा तयोक्तं तव द्वारि अनेके पदातिकाः सन्ति। मन्त्रजाप्यसमये तत्र गन्तुं न शक्यन्ते। मणिदत्तो ब्रूते। तव गमने कोऽपि विरोधं न करिष्यति। मयाद्य सर्वे ज्ञापयितव्याः। भवत्या यातायातं सुखेन भविष्यति। ततो मणिदत्तो गत्वा मण्डपमेकमकरोत्। इयं तापसी घोटकदोलया गत्वानङ्गसेनां तेनैव विधिना मन्त्रं जापयति। तया सह कामिकल्पलता कथालापं कुर्व्वती नित्यमेव तिष्ठति। अथैकदा तापसी तामनङ्गसेनामभ्यधात्। पुत्रि! त्वमीदृशीं दशां कुतो गतासि। त्वामतीव कृशतनुं दृष्ट्वा तव दुःखेनाहं महती दुःखिता तद्वदतु भवती! अनङ्गसेना ब्रूते। मातर्यावन्मम पतिर्वाणिज्यार्थं गतस्तावदहं पुरुषच्छायामपि न पश्यामि। इदानीं मन्त्रजाप्यसमये पुरुषं दृष्ट्वा पतिक्रीड़ां स्मरामि। तापसी ब्रूते। यद्येवं तमेव वरय। सा ब्रूते यद्येवं तदा भवती तमिदं वदतु। तापसी वदति। स मया तुभ्यं दत्तः सुखात् सुखमाचरतु भवती। सा ब्रूते। एतदन्यत्र न

ब्रवीतु भवती। ततो हर्षिता भूत्वा कामकल्पलता शशिदेवाय रहस्यं निवेदितवती। तच्छ्रुत्वा शशिदेवः क्रीडार्थं नित्यमेव प्राप्तजीवन इवाभूत्। अथ तयानङ्गसेनया सह विविधां क्रीड़ां कुर्व्वाणस्तिष्ठति। अनङ्गसेनापि पण्डितं शशिदेवं प्राप्य शङ्करदत्तं विसस्मार। तापसी मन्त्रजाप्यच्छलेन शशिदेवक्रीड़ार्थं नित्यमेव यातायातं करोति। अथैकदा मूलदेवः शशिदेवमब्रवीत्। सखेऽत्र स्थित्वा प्रयोजनाभावः तस्मादनङ्गसेनामादाय स्वदेशे गम्यताम्। शशिदेवो वदति कथमेतत् शक्यम्। मूलदेवो वदति। तव वचनेन साऽतीव रागवती त्वं यद्वदिष्यसि तत् सा करिष्यति। ततो दोलया साऽत्रागमिष्यति तदा मयोपायः कर्त्तव्यः। शशिदेवो गत्वानङ्गसेनां मूलदेवोपदिष्टं कथयामास। सा तदपि अङ्गीकृतवती। मूलदेवः सहसा भट्टशतैकमादाय राजद्वारं समागत्य शशिदेवसदृशं कृत्वा दोलारूढ़ां तां निरीक्ष्य तस्या वस्त्रप्रान्ते धृत्वा वदति स्म। त्वं मम भार्य्या प्राणसमा कथं प्रपलाय्य यास्यसि। तदा रक्षका दासीजनाश्चानङ्गसेनायाश्चेष्टां मणिदत्ताय कथयामासुः। तत् श्रुत्वा मणिदत्तो राजानं ज्ञापयामास। राजा च मित्रप्रतीतोऽनङ्गसेनामात्मसमीपमानीय मूलदेवं वदति। रे रे निर्लज्ज! मित्रपत्नी अनङ्गसेना त्वया मत्पत्नीं वदित्वा कथं धृता। तस्याः पिता मणिदत्तः ख्यात एव आस्ते तत् कथमेतत् वदसि। याहि याहि त्वामहं व्यापादयामि। किङ्करोमि यज्ञोपवीतमास्ते।

श्वेतकेतुरहं तेन वक्ष्यामि। ततस्तेनोक्तम्। चिरप्रवासिना मया तामेवालोक्य सा मया धृता। ततोऽहं मम पत्नी-मानीय अवश्यं नृपते दर्शयामि तदैव ममैषापकीर्त्तिः पलायिष्यते इति वाक्येन सर्व्वान् सन्तोष्य गतः। गत्वा का-मिकल्पलतामाह मातर्य्यदि त्वं मन्यसे तदानङ्गसेनामादाय स्वदेशं गच्छामः। तयोक्तं कथमेतच्छक्यम्। मूलदेवो वदति। मातः! साऽतीव रागवती शशिदेववाक्यात् यास्यति। किन्तु तस्या अकीर्त्तिर्लोके स्थास्यति। एका मृता स्त्री मया नेतव्या। गन्धचन्दनहरितालादिभिस्तां परिमार्ज्यादाय दोलया कृत्वा शशिदेवेन सह तत्र भवती यास्यति। अनङ्गसेनायाः सर्व्वाभरणं तस्यां दत्त्वानङ्ग-सेनायाः शय्यायां शाययित्वा भवत्यात्र गन्तव्यम्। शशि-देवस्तत्र गृहेऽग्निं दत्त्वानङ्गसेनामादाय पलायिष्यते। तदा-ऽनङ्गसेनायाः सर्व्वाभरणेन युतां तामालोक्य सर्व्वेऽनङ्गसेना-ज्ञानं तस्यामेव करिष्यन्ति।

ततः कैश्चिदपि न वक्तव्यं अनङ्गसेना परपुरुषमादाय पलायितवती। अथ मूलदेवस्योपायेन तथाविधं कर्म्मा-चर्य्य तामादाय मूलदेवेन सह स्वदेशमगमत् शशिदेवः। अथापरदिने तन्मातापितरौ बहुविधं विलपन्तौ तिष्ठतः। राज्ञा समागत्य तस्याऽस्थीनि मित्रस्नेहात् श्मशानतीर्थे प्रस्थापितवान्। तापसी हा हा कृत्वा विलपन्ती वदति। अस्मिन् देशे न स्थातव्यं अनङ्गसेना प्रियशिष्या मृता तदहं अन्यत्र यामि इति निगद्यापि पद्मावत्यां नगर्य्यां

ययौ । अथ कियता कालेन मूलदेवोऽनङ्गसेनामादाय शशि-देवास्तां राजानं दर्शितवान् उवाच च । सत्पत्नी-मनङ्गसेनाकारां पश्यतु देवः । अस्याः सादृश्ये मोहेन पुरानङ्गसेना धृता ततस्तामालोक्य राजा विस्मितो वदति । अहो ! साक्षादनङ्गसेनेयं ततो राजा प्रसादं दत्त्वा प्रस्था-पितवान् । अनङ्गसेनाया मातापितरौ तां दुहितरमेवा-लोक्य अनङ्गसेनायाः सर्व्वाभरणं दुहितृस्नेहात् तस्यै दत्तवन्तौ चक्रन्दतुश्च । वेतालो वदति किं कामकल्प-लताया महती बुद्धिर्मूलदेवस्य वा वदतु देवः । राजा वदति शृणु रे वेताल ! मूलदेवो महान् धूर्त्तः यतः सर्व्वत्र उपपन्नबुद्धित्वमस्य । इति राजानं वञ्चयित्वा वेतालः शिंश-पावृक्षे पुनर्लंलाग ।

इति एकविंशो वेतालकथाप्रबन्धः ।

---

## द्वाविंशकथारम्भः ।

अथ पुनरानीयमानो वेतालः कथामपरां कथयति । देव ! नर्म्मदातरङ्गिणीतीरे एकचक्रवतीनामधेया नगरी स्थिता । अस्याममरिमौलिमणिर्नाम राजा बभूव । एकदा महा-कायो जन्तुरेक आगत्य स्रोतसा मिलितः पुरजनैः कुतुहलेन

स विदारितः। तस्योदरे त्रैलोक्यमोहिनीयाकृतिरेका कन्या प्राप्ता। सहसा सर्वे तद्वृत्तान्तं राजानं ज्ञापयामासुः। राजा तत्र गत्वा तामालोक्य विविधसौहृदमाचर्य्य पप्रच्छ। हे कन्यके! का त्वम् किमर्थमीदृशीं दशां गतासि। पृष्टा ब्रूते। देव! नृपमणिमुकुटस्य राज्ञः शोभावती नाम कन्याहम्। सखिशतपरिवृतया जलक्रीडार्थं मया नद्या-जले समायातीं तदानीमहमनेन प्राप्य गिलिता। स्वप्नो-त्थितेव भूतास्मि। मम पितुर्देशः कुत्र अहं वा क्व एकमपि न जानामि। तत् श्रुत्वा राजा वदति कन्यके! पूर्वमेव तव विवाहार्थं नृपमणिमुकुटो राजा मम स्थाने मनुष्यं प्रस्थाप्य स्थितः। तत् श्रुत्वा सा वदति, देव! भवतः किन्नाम। राजाह अरिमौलिमणिनामा नृपतिरहम्। सा ब्रूते। देव! ममाभिलषितसिद्धिं करोतु। ततो राजा तस्याः पाणिग्रहणं चिकीर्षुरभवत्। तदवगम्य प्रच्छन्न-रूपिणा राक्षसेनोक्तम्। राजन्! कथमिमां शोभावतीं नेष्यसि। त्वया सह अहं इमां खादिष्यामि। तत् यदि स्वकी-यजीवनमिच्छसि तदा अस्याः पाणिग्रहणं मा कुरु। मम पिता कुम्भीररूपेण माता च जलौकारूपेण विद्यते। अहं क-लासरूपेणास्मि। ततो राजा प्रकुप्य तमब्रवीत्। रे रे राक्षस! तव पिता मम किं कर्तुं पारयति। राक्षसः क्रुद्धो-ब्रूते। रे नृपाधम! वयं ब्रह्मराक्षसाः। स त्वं कथमितरमिव क्षिपसि। यातु मया वारमेकं सोढम्। राजा वदति वारै-कस्य प्रयोजनानि सन्तु। शतवारामधिक्षिपामि। याहि दुष्ट!

यत् कर्त्तुं पारयसि तदा तत् करोषि। ततः कोपवता राक्षसेनोक्तम्। नृपाधम! सर्व्वमिदानीं राज्यं रक्षिष्यसीति-निगद्य सहसा पितरं विज्ञाप्य लङ्कापुरीं गत्वा राक्षसानां मेलकं कृत्वा अरिमौलिमणिनृपतेर्नगरं गत्वा स तालजङ्घः पित्रा सहाजगाम। प्रच्छन्नरूपेण यान् मानुषान् प्राप्नु-वन्ति तान् खादन्तः सन्ति। अथ तालजङ्घेनोक्तं मातः! कुम्भोदरि! वेश्यारूपमाधृत्य तन्नगरं गत्वा मानुषान् खादि-त्वा नगरं शून्यं कुरु। तत् श्रुत्वा कुम्भोदरी वेश्यारूपं धृत्वा कुट्टिनीगृहे वसतिञ्चकार। कुट्टिनी तमालोक्य पृच्छति। का भवती। सा ब्रूते मदोन्नता नाम वेश्याहं तव गृहे स्थातु-मिच्छामि। तयोक्तं मत्गृहे सुखेन तिष्ठतु। ततो ये ये तां कामयन्ति तां क्रीड़ाच्छलेन रहसि नीत्वा खादन्ती विद्यते। अथैकदा वसुदत्तनाम्नः उपाध्यायस्य पत्नी विद्याधरस्तया सह मिलितः। तदा विद्याधरमति सुन्दरं दृष्ट्वा तेन समं क्रीड़न्ती विद्यते। अथ निजपत्नी-निर्बन्धात् दिनमेकं नागतः। तदा राक्षसी निश्वस्य काम-पीड़िता मातृरूपेण तस्य गृहे रात्रौ गत्वा विद्याधरं निज-कान्तया सह रममाणमालोक्य प्रकुप्य तत्रैव भ्रमरी भूत्वा पुष्पघ्राणस्य व्याजेन विद्यते। ततस्तामालोक्य विद्याधरो निजकान्तामब्रवीत्। प्रिये! भ्रमरीयं निस्सार्य्यताम्। अस्याः पक्षवातेन दीपो निर्व्वाणतामेष्यति। ततस्त-योक्तं नाथ! पुष्पवरगन्धेनात्र भ्रमरीयं तिष्ठति तिष्ठतु। ततो विद्याधरेण दीपनिर्वाणतया हस्ताघातेन सा क्षिप्ता।

ततः सा मूर्च्छां महतीमासाद्य कथमपि स्वास्थ्यमासादितवती। ततः सा मदोन्नता मनसेत्यचिन्तयत्। मत्समीपं यदा यास्यति तदा तस्य रुधिरं मांसञ्च खादित्वा दुःखम् एतत् प्रशमयिष्यामि। तथा परदिने तया सह क्रीड़ित्वा गतनिद्रं विद्याधरम् स्वयं व्यापादयामास। खर्ज्जूरजङ्घेनागत्य खादितमिमं ज्ञात्वा निजस्थानमाजगाम। अथ पौरेण ज्ञात्वा तत्त्वमस्यान्विष्टा राजनि ज्ञापिता। देव! कुट्टिनीगृहे एका राक्षसी वेश्यारूपेण विद्यते। सैव पौरजनान् खादति विद्याधरोऽपि तया खादितः। ततोऽरिमौलिमणिर्ज्ञात्वा तां पप्रच्छ। रे पापिष्ठे! त्वया ब्राह्मणपुत्रः खादितः। पौरेण दृष्टाहं ज्ञापितः। राक्षसी ब्रूते भवतः भद्रमेव ज्ञापितम्। कुम्भोदरी नाम राक्षसी अहं मम भर्त्ता खर्ज्जूरजङ्घस्तस्य पुत्रः तालजङ्घः। मत्पुत्रं तिरस्कृत्य शोभावती कन्या त्वया नीता। तेन कोपेन राक्षसाम् गृहीत्वा मम स्वामिना विप्रः खादितः। ततो राजा सर्वानादिदेश। राक्षसीयं हन्यतामिति। सा निजमूर्त्तिं धृत्वा तान् सर्वान् तिरस्कृत्य खर्ज्जुरजङ्घस्य स्थानं गता। ततो राजा योग्यलोकं प्रस्थाप्य तस्य प्रीतिमकारयत्। नियमं कृत्वा प्रत्यहमेकजनं ददाति। अनेन विधिना कालं नयमानो विद्यते। अथैकदा पुत्रवत्या दिवसो मिलितः। सा च पुत्रमरणमवगम्य रोदिति। इत्येतत्काले महाबलनाम्ना युवराजेन देशान्तरिणा पृष्टा। मातः! किमर्थं रोदिषि। तदा सा महाबलं वृत्तान्तमभ्यधात्। तेनोक्तं मातः! सर्व्वान्

राक्षसानहं व्यापाद्य तव पुत्रस्य रक्षां करिष्यामि। राजानं गत्वा ज्ञापय। ततः सा हृष्टा सहसा गत्वा राजानं ज्ञापयामास। राजा च तं नीत्वा वदति। वत्स! यद्येवं तदैतद्राष्ट्रं तुभ्यमहं दास्यामि। ततो हर्षितो महाबलो गत्वा खर्जूरजङ्घं ताड़यामास। तदास्य वीर्य्येण सः कातरो भूत्वा ब्रूते। युवराज! रक्ष माम्। युवराजो वदति। ब्राह्मणरक्षार्थं शपथं कुरु। अरिमौलिमणिनृपतेर्नगरे त्वया बलं न कर्त्तव्यम्। तत् श्रुत्वा राक्षसेन सत्यमकरोत्। तं विमुच्य युवराजो राजानमगमत्। राजा कृतकार्य्यो भूत्वा मन्दादरं कृतवान्। ततः प्रकुप्य कुमारेण भणितं तवारिमौलिमणिनामान्यपदार्थसमासेन युक्तम्। तस्मात्त्वयुक्तो भवानिति निगद्य सहसा महाबलो राक्षसाय स्वातन्त्र्यं दत्त्वा स्वदेशमगमत्। अथ तेन राक्षसेन तत् पौरजना भक्षिताः। राजा शोभावतीं सपुत्रीं गृहीत्वा महाबलस्य देशमगमत्। महाबलस्तस्य पूजामाचर्य्य परदिने पप्रच्छ। राजन्! कथमीदृशी दशा भवतः। ततः कृतापराधेन राज्ञा वक्तुमपि न शक्यते। महाबलेन महात्मना किञ्चित् विहस्य पुनर्गत्वा राक्षसं सत्यं कारयित्वा निजकरितुरगसैन्यसामग्री दत्त्वा पुनस्तथाविधमरिमौलिमणिं नृपतिं कृत्वा स्वदेशमगमत्। देव! स पौरजनविद्याधरब्राह्मणवधभागी किमरिमौलिमणिः किं वा महाबलः, किमथवा राक्षसजङ्घः। राजा वदति शृणु रे वेताल! पौरजनानां बधोऽरिमौलिमणौ राजनि नान्यत्र।

इति प्रश्नच्छलेन नृपतेर्मौनभङ्गं कृत्वा शिंशपावृक्षे पुनर्ललाग।

इति द्वाविंशवेतालकथाप्रबन्धः।

---

## त्रयोविंश कथारम्भः।

अथ राज्ञा पुनरानीयमानो वेतालः कथामपरां कथयति। देव! अस्ति नर्म्मदातीरे धर्म्मपुरनामधेयं नगरम्। तत्र जीमूतवाहनो नाम राजा बभूव। स राजाऽमात्यसहितः सुखासीन आस्ते। इत्येव काले एका स्त्री करुणस्वरेण रोदिति। क्रन्दनं श्रुत्वा राजा प्रतीहारमादिदेश। प्रतीहार! का रोदिति गत्वा विचारय। ततो गत्वा वदति मातः! का त्वं कथं वा रोदिषि? सा ब्रूते नागमाताहं पुत्र! ममाष्टपुत्रा गरुड़ेन खादिताः। एष एकः पुत्रो विद्यते। एतं द्वेषभावेन खादितुं स्पृहयति तेनाहं क्रन्दामि। ततः प्रतीहारो गत्वा राजानं ज्ञापयामास। देव! शङ्खनाम्नो नागस्य मातासौ रोदिति। तस्या अष्टौ पुत्रा गरुड़ेन खादिताः। एक एव पुत्रो विद्यते तमपि वैरिभावेन खादितुं स्पृहयति। भविष्यत्पुत्रशोकमधिगम्येति। तत् श्रुत्वा राजा वदति। प्रतीहार! गत्वा तां ज्ञापय अहं तस्याः पुत्ररक्षां करिष्यामि इति किन्तु गरुड़स्यागमन-

कालं समधिगम्य मां नेष्यति। तच्छ्रुत्वा प्रतीहारी गत्वा नागमातरमब्रवीत्। नागमातस्तव पुत्रं राजा रक्षिष्यति। किन्तु गरुड़ागमनकाले राजानं ज्ञापयिष्यतीत्युक्त्वा चलितः। अथ तया गरुड़ागमनकाले नीतः राजा परमधार्म्मिको जीमूतवाहनः तस्मै गरुड़ाय स्वदेहमुपढौकितवान्। ततो गरुड़ो नृपतेः पार्श्वमेकमखादयत्। अनन्तरं पार्श्वपरिवर्त्तनमाचर्य्य अपरपार्श्वम् अपनीय वदति पापिष्ठेन मया खादितः। अथ राजोवाच महाशय! खगेश्वर! एतत्पार्श्वमपि सुखेन खादित्वा निजस्थानं सर्पतु भवान्। तच्छ्रुत्वा सहसा वितर्क्य गरुड़ः विस्मितोऽचिन्तयत्। कोऽयं महायशाः पापिष्ठेन मया खादितः। अन्ये तावन्मद्दर्शनेन प्राणांस्त्यजन्ति। अयञ्च खाद्यमानोऽपि प्रसन्न एतद्वचनं वदति। विशेषतः यज्ञोपवीतधारी दृश्यते। तस्मात् ब्रह्मवधं कृतवानस्मि इति विचिन्त्य गरुड़स्तमब्रवीत्। भो महासत्व! किं ब्राह्मणो भवान्। राजा वदति। नाहं विप्रः। सन्देहं विमुच्य भवान्मां खादतु गरुड़ो वदति। किं क्षत्रियोऽसि तत्श्रुत्वा राजा तूष्णींस्थितः। गरुड़ः पुनस्तमब्रवीत्। भो महासत्व! भवतोवर्ण्णः समधिगतः किन्तु निजनाम पापिष्ठं मां ज्ञापय। निर्व्वन्धातिशयेन राजा ब्रूते। पक्षिराज! जीमूतवाहननृपतिरहम्। गरुड़ो वदति। अहं तावन्नागान् खादामि तत् भवान् कथं आत्मानं खादयति। इति पृष्टो ब्रूते। खगेश्वर! शङ्खचूड़स्य मातुरष्टौ पुत्रा भवता खादिताः। एक एव पुत्रोऽव-

शिशुस्तमपि खादितुं स्पृहयति भवान् इति सा रोदिति। तदहं प्रतिज्ञातस्तस्य रक्षार्थमात्मशरीरमुपनीतवान्। तत् श्रुत्वा दुःखितो भूत्वा पातालं प्रविश्य अमृतमानीय गरुड़ो जीमूतवाहनस्य शरीरं सम्पूर्णं कर्त्तुमुद्यतोऽभवत्। तदा राजा वदति। भो पक्षिराज! यद्येवं स्यात् तदाष्टौ नागपुत्रान् जीवयाशतः। पश्चात् यत्युक्तं तत् आचरिष्यति भवान्। एतेन वचनेन गरुड़ः प्रीतो भूत्वा तान् सर्व्वान् जीवयित्वा पश्चात् नृपतिं जीवयतिस्म। ततः सा नाग-माता नवपुत्रसहिता सुप्रीता निर्भया तत्रैव स्थिता। जीमूतवाहनोऽपि स्वालयमाजगाम। जीमूतवाहनगरुड़-योर्मध्ये को महायशाः इति वदतु देवः। राजा वदति। शृणु रे वेताल! जीमूतवाहनः "पक्षिराजो मां यज्ञोप-वीतधारिणमालोक्य न खादिष्यति। विशेषतः तेन सह मम विरोधो नास्ति तस्मात् नागपुत्रस्य रक्षणमाचर्य्य महापुण्यं प्राप्नोमीति विचिन्त्य गरुड़ाय स्वशरीरमुपनीत वान्। किन्तु गरुड़ो महायशाः"। नृपताविति वादिनि वेतालः शिंशपावृक्षे पुनर्लग्नाग।

इति त्रयोविंश वेतालकथाप्रबन्धः।

---

## चतुर्विंश कथारम्भः।

अथ राजा वेतालं शाखांशाखां भ्रामंभ्रामं कदर्थ्य एक वृक्षशाखायां विधृत्य स्थितः। राजा प्रबन्धेनानेतुमक्षमो भूत्वा खड्गेन शाखामुच्छिद्य शाखासमेतं वेतालं स्कन्धे कृत्वा मौनपरायणो भूत्वा चान्तिशीलसमीपं गन्तुमुपचक्रमे। तथापि वेतालः गुरुवाक्यं प्रश्नमकार्षीत्। देव! दक्षिणस्यां दिशि धर्म्मसेनो नाम राजासीत्। तस्य महादेवी चन्द्रावती तस्यामनेन विलासवती नाम कन्या समुत्पादिता। एकदा सिंहलेश्वरोराजा तं धर्म्मसेनं जेतुमागतः तदानीमन्योऽन्ययुद्धं तयोर्नृपत्योर्बभूव। अथ बलवता सिंहलेश्वरेण पराजितोधर्म्मसेनः स्वराज्यं विहाय हयमारुह्य वनं प्रविवेश। तत् वृत्तान्तमधिगम्य तस्य महादेवी चन्द्रावती दुहितरं विलासवतीमादाय वनं प्राप्तवती। अथ तत्रैव वने प्रचण्डसिंहोनाम चत्रियः मृगान्वेषणाय ससुत आजगाम। स कर्दमे पथि स्त्रीद्वयपदचिह्नं निरीक्ष्य प्रचण्डसिंहः पुत्रमब्रवीत्। भो पुत्र! दिव्यस्त्रीद्वयस्य पदचिह्न मुपलक्ष्यते। तत् यदि स्त्रीद्वयं लभ्येत तदा या दीर्घचरणा सा मम भार्य्या, ह्रस्वचरणा तव भार्य्या। तत् श्रुत्वा तत् पुत्रेणाङ्गीकृतम्। ततः तेन पदचिह्नेन गत्वा चन्द्रावतीविलासवत्यौ सरोवरे प्राप्ते दैववशात्। दीर्घचरणा प्रचण्डसिंहेन स्वीकृता। ह्रस्वचरणा तत्पुत्रेण स्वीकृता।

कालवशात् तयोस्ताभ्यां पुत्रावुत्पादितौ। तयोः कुमारयोः सम्बन्धः को भवति। क्रोधं विमुच्य सन्देहच्छेदमारचयतु देवः। तत् श्रुत्वा राजा विपरीतसम्बन्धपरिच्छेद आसक्त इवासीत्। अज्ञात्वा उत्तरं न दातुं दोषो नास्ति इति विचिन्त्य दृढ़मौनेन चान्तिशीलसमीपं गच्छन् विद्यते।

इति चतुर्विंश वेतालकथा प्रबन्धः।

---

## पञ्चविंशकथारम्भः।

वेतालो वदति। भो राजन्। अनेन सत्वेन गुणविशेषेण प्रज्ञाबलेन त्वयि प्रीतोऽस्मि। त्वं विजयी भव। किन्तु तव हितं यद्वदामि तत् शृणु। राजोवाच। को भवान् मृतकाधिष्ठितः केन वा, सर्वज्ञता तवाधिष्ठात्री केन वा, तदहं श्रोतुमिच्छामि। श्रुत्वा विहस्य वेतालोऽब्रवीत्। शृणु राजन्! मम वृत्तान्तम्। अहमिह राजधान्यां जात्या तैली गृहस्थः स्थितोऽस्मि। एकदा दैवयोगेन मम गृहे ज्ञानी पुरुषैकः समागत्य मिलितः। कतिपयमासान् मदीयायतने मठं कृत्वा मया स्थापितः प्रतिदिनं तस्मै भिक्षाभोजनाद्यर्पयत्याते। अनन्तरं वर्षाप्रभाते तेन ज्ञानिना देशान्तरं भ्रमिष्यते इति कृत्वा निभृतमहमेवमुक्तो विशे-

षेण । भो गृहस्थ ! अस्माकमनेकसेवां कृत्वा तिष्ठसि तेन त्वयि परितुष्टोऽस्मि । आगच्छ ते ज्ञानसिद्धिं कथयामीति कृत्वा कृपया मह्यं सिद्धिज्ञानं कथयामास । पुनः सत्यमिदं कारयाञ्चक्रे । मम पूर्व्वसेवकः पुत्रप्रतिमो वर्षाभ्यन्तरे ममान्वेषणे समागमिष्यति । तस्मै ज्ञानं कथयिष्यामीति स्वीकृत्य तिष्ठामि । स तु मम गमनसमये समागत्य न मिलितः समीक्ष्यते । यदि त्वमस्माकं सत्यं पालयसि तदा तस्मिन् अत्र भ्रमणोद्देशे समायते ज्ञानमिदं तस्मै त्वं विज्ञापयिष्यसि । स च तव भ्राता तस्मै कपटं न करिष्यसि यद्येवं न करिष्यसि तदा तव दुर्व्विपाकेन अनेन मम शापेन विपरीतमरणं भविष्यति । सुदृढ़मिति कृत्वा गुरुर्मे मामुपदिश्य देशान्तरं चचाल । अतएव निगद्यते त्वमस्मदीये उपदेशेऽवहेलां न करिष्यसि इति प्रतिपाद्य वेतालो हृष्टिं चकार । ततो राजा विहस्य वेतालं पुनराह । भो वेताल ! निगद्यतां तत् वृत्तम् । ततो वेतालो हसित्वा पुनराह । शृणु राजन् ! ज्ञानिनि मम गुरौ गते देशान्तरे तच्छिष्यः समागत्य ममाश्रमे मिलितः । आगत्य मामुवाच । योऽसौ ज्ञानी चात्रस्थितः स तु क्व, तदा मयोक्तं देशान्तरं गतः । मां प्रति किं विधानं कृत्वा गतः । तस्मै मयोक्तं न किञ्चित् । श्रुत्वा स तु हाहा ! हतोऽस्मीति कृत्वा बहु विलप्य निराशो भूत्वा जगाम । गते तस्मिन् ततः प्रभृति मया तदुपदेशं ध्यायन् सुखेन गृहवासः क्रियते । गुरुवचनमन्यथा क्रियमाणेनापराधे मयि शङ्का महती वाधमाना ममान्तरे । अतो दैव-

योगेन राजभवने चौरः स्वौर्य्यं कृत्वानेकसामग्रीमपहृत्या-श्वशालाया घोटकैकं गृहीत्वा ममद्वारि बन्धनं कृत्वा विहाय चौराः पलायिताः। प्रभाते राजा चौर्य्यं श्रुत्वा दुःसाधु मानीय समादिदेश अरे दुःसाधो! मदीयभाण्डागारे अपहृति भूँता घोटकोऽश्वशालाया नीतोऽस्ति ज्ञायतामस्य निश्चयः सुदृढ़मपि ज्ञात्वा यदि चौरं समानीय न ददासि तदा त्वा-मेव सपरिवारमेकत्र कर्त्तित्वा प्रोथयिष्यामि इति श्रुत्वा दुःसाधुना चौरान्वेषणं प्राप्य ममद्वारिच घोटकं प्राप्य मामपि धृत्वा चौरमिति कृत्वा राजनि विज्ञाप्य घोटको दर्शितः। श्रुत्वा राजा सकोपः समादिदेश। एनं शूले नीत्वा देहि। तथा तेनैव राजादेशं शिरसि निधाय ग्रामो-पान्ते समानीयाहं तैरेव दण्डपाशिकैः शूले समारोपितः। शूले स्थित्वा योगबलेन समाधिनाच प्राणान् वाहयित्वा क्रमशो गलिते हृदि गलिते वपुषि पुनरहं ततः संमुखस्थित-घर्घरातीर-वर्त्तिवृक्षे बेतालाधिष्ठितोभूत्वा तिष्ठामि। ज्ञानबलेन सर्व्वज्ञता मयि समुत्पन्ना सतु मम गुरुशिषो देशे देशे परिभ्रम्य हिङ्गुलादेवीसमीपवर्त्तिनि देशान्तरीणां विश्रामस्थानमण्डपे गुरुं ददर्श। दृष्ट्वा सर्वं वृत्तान्तं गुरवे निवेदितम्। श्रुत्वा व्यथितेन गुरुणा प्रोक्तम्। स तु गृहा-श्रमी तैलिको मदीयज्ञानं अपहरन् चौरः कृतः तस्य तेन यथोचित-फलं भूतं सतु ज्ञानबलेन बेतालाधिष्ठितः प्रेतो भूत्वा शिंशपातरोः शाखायां मङ्गलकोटिराजधान्यां घर्घरातीरे लम्बमानोऽवतिष्ठते। त्वयि परितुष्टोऽस्मि त्वमस्मदीयः पुत्रः

मम प्रसादेन त्वयि ऋद्धिः सुसाध्या। ममोपदेशेन वरेण सिद्धिस्ते भविता ऋद्धिसिद्धिभ्यां त्वमेव खेचरो भूत्वा सुखेनापि परिभ्रम इत्युक्त्वा कुणपो विरराम। श्रुत्वा राजा हर्षगद्गदवचा पुनरिदमाह अरे कुणप! यदि प्रसन्नोऽसि तदाशेषं विशेषेण कथां सकलां मे कथय समुपदिश किमहं करिष्यामि। ततो वेतालः पुनरुवाच।

शृणु रे महाराज! त्वं देवरूपीमानुषविग्रहः सर्व्वं सञ्चितानि महन्ति तपांसि ते सन्ति तेन भाग्योदयेन त्वमत्रानीतोऽसि शृणु कथयामि। ततः प्रसन्नेन गुरुणायमुपदिष्टोऽस्ति "त्वमितो महासत्त्वमित-महासत्त्व महाराज-श्रीविक्रमादित्यस्य राजधानीं गत्वा तस्य राज्ञ उपढौकनाय विल्वफलाभ्यन्तररत्नानि विनिवेश्य दिनकतिपयं योजयित्वा राजानं वशीकृत्य तं महासत्त्वं सहायं कृत्वा प्रेताधिष्ठितश्मानिनं राजसहायेन दक्षिणश्मशाने नीत्वा तं शवं राजानञ्च मण्डलं रचयित्वा तत्र नीत्वा मण्डलपूजां विधाय शवस्य मस्तके पादं दत्त्वा राजानं देव्यै वलिं दत्त्वा शवद्वयमस्तके पादद्वयं दत्त्वा निगदिष्यसि देवि! गृहाण मम सत्त्ववलिं ऋद्धिसिद्धी मे भवताम् इति निगदिते त्वयि देव्याः प्रसादोऽयं भविष्यति इति गुरूपदेशं प्राप्य स तु क्षान्तिशीलः समागत्य कपटभावेन भवन्तं वशीकृत्य भवद्द्वारेण मामेवं गृहीत्वा त्वामपि कर्त्तयित्वा सिद्धिं साधयिष्यति। सर्व्वमिदमपि रहस्यम् अखिलं ते ज्ञापितं ज्ञात्वैतत् यदुचितं तद्विधीयतामित्युक्त्वा स विरराम।

ततो राजा सभयोत्फुल्लनयनो हर्षाश्रुणा पूर्णलोचनः पुनर्वेतालमाह। भो सर्व्वज्ञ! महामते! ब्रूहि। किमिदानीं करिष्ये। नृपवचनं श्रुत्वा वेतालः पुनराह। तव-महासत्त्वतयाहं प्रीतोऽस्मि। तेन त्वयि रहस्यं ज्ञापयामि त्वमिदानीं मामेव नीत्वा तत् सकाशं गच्छ। गते त्वयि तदा स तु त्वां दृष्ट्वा हर्षमण्डलं प्राप्य निगदिष्यति भो महाराज! समायातोऽसि तत् द्रुतं स्नानं कुरु। देवताराधनं समाचर त्वया सह देवतापूजां विधाय आवयोरेव यथावाचा सिद्धिर्भवति तथा कर्त्तव्यं तर्हि त्वमपि तद्वचनेन देव्याः कुण्डे पयसि स्नात्वा तत्रोपस्थिते तदा त्वां वदिष्यति देवतां पूजयाग्रे त्वं, पश्चादहं तदा देवतां पूजयिष्यामि। कृते देवताराधने तदा विदिष्यति देवतां प्रदक्षिणीकृत्य दण्डप्रणामं कुरु तदा त्वं वदिष्यसि नरपतिरहं दण्डधारी सिंहासनस्थितः। मम पादपद्मं मण्डलिका राजानः प्रणमन्ति। मम स्नातकब्राह्मणो मन्निमित्तं देवताराधनं पितृक्रियादिनकृत्यं कुरुते। तेन मम नित्यक्रियाकरणं सुसिद्धं भवति। मम हस्ते राजदण्डो विद्यते। तेन देवताराधनदण्डप्रणामादिषु ममाधिकारो नास्ति। यदिदानीं भवतो विधानेन दण्डप्रणामः कर्त्तव्यः तदा शिक्षापय केन प्रकारेण दण्डप्रणामस्तं दृष्ट्वा तेनैव प्रकारेण करिष्यामि। तव वचनमिदमवगम्य यदा स तु क्षान्तिशीलो देवताया दण्डप्रणामं कुर्वन् कायप्रपातं कुरुते तत्क्षणात् त्वमपि खड्गेन शिरश्छित्वा तन्मस्तके मृतकस्य मस्तके च पादद्वयं दत्त्वा मुकुलाकारं

शिरस्यञ्जलिं निवेश्य वदिष्यसि। देवि! परितुष्टा भव। गृहाण बलिमिमम्। तव प्रसादेन तालवेतालसिद्धिर्मे सुनिश्चला भवतु। वरमिमं प्रार्थयिष्यसीति निगद्य वेतालो विरराम।

श्रुत्वैतद्राजा महोत्साहेन आह्लादहृदयो मृतकं स्कन्धे निधाय क्षान्तिशीलसमीपमाजगाम। समागतं राजानं दृष्ट्वा योगी हर्षनिर्भरमना राजानमाह महाराज! समायातोऽसि रात्रिप्रहरत्रयमिदानीम्। वेगेन देव्याः कुण्डे स्नात्वा समागत्य मया सह एकत्र कृतमण्डलरचने षोड़शोपचारेण देवताराधनं कुरु तव समीहितं भविता ममापि चाभिमतं प्रयोजनं सुसिद्धं भविष्यत्येव। श्रुत्वा राजा तद्वचनेन सरोवरे स्नात्वा समागत्य मिलितः। कृतपूजामण्डले योगिसमाहृतषोड़शोपचारस्तुतिर्योगिना समं देवीं समाराधयामास। पूजावसाने योगी प्रोवाच। राजन्! देव्यै दण्डप्रणामेन प्रणम। राजोवाच। चक्रवर्त्ती नृपतिरहं सकलभूपाला न मम पादपीठं प्रणमन्ति। विशेषतोदण्डधारी चाहं शास्त्रतोदेवपित्राराधनं न करोमि स्वयं, स्नातकब्राह्मणेन सर्व्वमिदमनुष्ठीयते। तत् केन प्रकारेण दण्डप्रणामः कर्त्तव्य स्तन्मां शिक्षापय। तर्हि राजवचनं श्रुत्वा दैवप्रेरितो योगी स्वयं दण्डप्रणामं चकार। तत्यवसरे राजा पार्श्वस्थितः खड्गं हस्ते गृहीत्वा योगिनश्च कर्त्तित्वा तन्मस्तके च पादद्वयं परिनिधाय पुष्पाञ्जलित्रयं देव्यै प्रदाय उच्चैर्जगाद जय जय देवि! जगन्मातः!

प्रलयोत्पत्तिस्थितिकारिणि! वरदे! बलिमिमं गृहाण परितुष्टा। ऋद्धिसिद्धीमे भवतामिति निगदितवान् देव्यास्वायतने गम्भीरोऽट्टाट्टहासो भूतः प्रत्यादेशश्चाभूत् राजन्! महासात्त्विक! जीव वत्सरशतं अखण्डितप्रतापः सन्, चक्रवर्त्तित्वेन राज्यसुखभोगं भुङ्क्ष्व। तालवेताल-ऋद्धिसिद्धी तव सुसिद्धे भवतामित्युक्त्वा देवी अन्तर्दधे। प्रभातसमयो भूतः। प्रसन्नशरीरः परैरलक्षितो राजा राजधानीं समागत्य मिलितः। सुखेन महता राज्यं चकार।

इति

वि,ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागर भट्टाचार्य्येण सङ्कलितायाम् जम्भलदत्त-प्रोक्त-वेताल पञ्चविंशतौ पञ्चविंशतिवेतालकथाप्रबन्धः।

समाप्तोऽयं ग्रन्थः।

---

